

**चन्दमामा** सम्पुटः - २१ जुलै - २००५ सञ्चिका - ७



## अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः


















**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १४४/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -

चेन्नै - शिवाजी, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

देहली - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com


© The stories, articles and designs contained in this issue are the exclusive property of the Publishers. Copying or adapting them in any manner/ medium will be dealt with according to law.



*संस्थापकौ –*
**चक्रपाणिः, बि. नागिरेड्डिः च**

# बालाः यन्त्रमानववत् न भवेयुः

संयुतिसर्वकारस्य एकं वर्षं समाप्तम् अस्ति एषु दिनेषु । एषु एव दिनेषु दूरदर्शनवाहिनी काचित् बालानां कश्चित् कार्यक्रमम् आयोजितवती आसीत् । आयोजकैः बालान् उद्दिश्य कश्चन सामान्यः प्रश्नः पृष्टः – ''भारतस्य प्रधानमन्त्री कः ?'' इति । कार्यक्रमे भागं गृहीतवत्सु बालेषु न कोऽपि एतस्य समुचितम् उत्तरम् उक्तवान् । एकः तु राष्ट्रपतेः नाम उच्चारितवान् । अपरः बालकः काङ्ग्रेस्पक्षस्य अध्यक्षायाः नाम उक्तवान् ।

मेमासस्य २७ तमे दिनाङ्के ४१ तमीं जयन्तीं निमित्तीकृत्य 'चाचा'शब्देन निर्दिश्यमानः जवहरलालनेहरुवर्यः बहुभिः बालैः स्मृतः विविधेषु कार्यक्रमेषु । किन्तु ते एव बालाः वर्तमानप्रधानमन्त्रिणः नाम स्मर्तुं न शक्ताः इति तु महते आश्चर्याय । यत्र प्रधानमन्त्रिणः नाम वक्तुं बालैः न शक्तं तत्रैव तैः एव बालैः चलच्चित्रजनानां क्रिकेट्क्रीडापटूनां च नाम लीलया उच्चारितम् । एतस्मात् स्पष्टं यत् बालाः स्मरणे दुर्बलाः न इति । यत् ज्ञायते तत् उक्तं तैः ।

एषा विलक्षणा स्थितिः या अद्य दृश्यते तस्याः निमित्तं बालानां निन्दनेन न किमपि प्रयोजनम् । अद्यतनशिक्षणव्यवस्थायाः फलम् एव एतत् । यद्विषये अधिकं ज्ञातव्यं तद्विषये अज्ञानम् अल्पज्ञानं वा वहन्तः बालाः, यद्विषये अधिकं ज्ञानं न अनिवार्यं तद्विषये अपारं ज्ञानं वहन्ति ! मानवीयमूल्यवर्धकस्य ज्ञानस्य वृद्ध्यर्थं ते अवकाशम् एव प्राप्नुवन्तः न सन्ति ।

विद्यालयानां पुनरारम्भः आसन्नः अस्ति (प्रचलति वा) । विरामकाले बालैः अर्जितस्य विशेषज्ञानस्य परीक्षणं प्रचलति तत्र । येषां विद्यालयानाम् आरम्भः अचिरात् एव भवेत् ते अपि एतम् एव क्रमम् अनुसरिष्यन्ति । किं वयं यन्त्रमानवान् निर्मान्तः स्मः ? न खलु ? बालाः मानवाः भवन्तु आदौ, येन च प्रवृद्धाः सन्तः ते देशस्य गौरवं वर्धयेयुः ।

*सम्पादकः* – **विश्वम्**

**Visit us at : http://www.chandamama.org**








# सत्यम् अग्निसमानम्

रात्रिभोजनस्य अनन्तरं सर्वे बालकाः पुस्तकं पठन्त्याः पितामह्याः सावित्र्याः समीपम् आगतवन्तः । दशवर्षीयः रामः ताम् अवदत् – ''अम्ब ! ह्यः पितृव्यः स्वस्य मित्रं वदन् आसीत् – 'कृष्णः आत्मानं महाबुद्धिमन्तं भावयति । सर्वान् मूर्खान् कर्तुं प्रयासं करोति सः । किन्तु सत्यं सदापि अग्निसमानम् । योग्यं दण्डनं प्राप्तं तेन' इति । सत्यम् अग्निसमानम् इत्यस्य किं तात्पर्यम् ? कृपया विवृणोतु'' इति ।

तं प्रीत्या स्वसमीपे उपवेश्य सावित्री अवदत् – ''केचन रहसि एव दुष्टकृत्यानि कुर्वन्ति । किन्तु कदाचित् वा तत् अन्यैः ज्ञायते एव । भवतः पितृव्यः एतदेव वदन् आसीत् । पूर्वं शारदः कमलः च एवमेव कुरुतः स्म । तयोः कथां शृण्वन्तु तावत्'' इति । ततः तया कथा आरब्धा –

पूर्वं कदाचित् गिरिपुरस्य भूस्वामिनः माधवस्य समीपम् आगत्य कश्चन युवकः अवदत् – ''श्रीमन् ! मम नाम विश्वनाथः इति । अहं पदवीधरः अस्मि । मम योग्यतायाः अनुगुणं यदि कोऽपि उद्योगः भवता दीयेत तर्हि अहम् अनुगृहीतः स्याम्'' इति ।

तदा भूस्वामी अवदत् – ''मम कार्यालये शारदः कमलः चेति उभौ उद्योगिनौ स्तः । तौ आ बहोः कालतः अत्र उद्योगं कुरुतः । भवान् तयोः आधीन्ये तिष्ठन् मासं यावत् कार्यं करोतु । तयोः संस्तुत्यनुगुणम् अहं भवते उद्योगं दास्यामि'' इति ।

विश्वनाथः बुद्धिमान् व्यवहारकुशलः च । अतः अचिरात् एव सः शारदकमलयोः प्रियः जातः । उभयोः अपि एकैका पुत्री आसीत् । तौ उभौ अपि इच्छतः स्म यत् स्वपुत्री विश्वनाथाय दातव्या इति ।

कदाचित् अवसरं प्राप्य शारदः विश्वनाथम् अवदत् – ''भवता कमलस्य वचने

विश्वासः न करणीयः । वञ्चनायुक्तां गणनां दर्शयन् सः भूस्वामिनं वञ्चयन् अस्ति । तस्य आयः पापमूलः'' इति ।

कमलः अपि विश्वनाथम् अवदत् – ''एषः शारदः लघून् अपि विषयान् अधिकृत्य भूस्वामिनः पुरतः रुदन् तस्य अनुकम्पम् आसाद्य प्रभूतं धनं ततः स्वीकरोति । तस्य वचनं न श्रोतव्यं भवता । अन्यथा भवता अपि अपख्यातिः प्राप्येत'' इति ।

तयोः उभयोः अपि वचनं श्रुत्वा विश्वनाथः नितरां खिन्नः । वस्तुस्थितिं ज्ञातुम् इच्छन् सः स्वस्य दूरबन्धुं दृष्ट्वा प्रवृत्तं सर्वम् अवदत् ।

सर्वं श्रुत्वा सः दूरबन्धुः अवदत् – ''तौ उभौ अपि महावञ्चकौ एव । श्रीरामनवमीसमये भूस्वामिना यत् धनं व्ययाय दत्तं तस्य महान् भागः कमलेन स्वायत्तीकृतः । भूस्वामिना धर्मशालाव्यवस्थार्थं दत्तस्य धनस्य अधिकः भागः शारदेन कोषे स्थापितः । किन्तु भूस्वामी तयोः विशषविश्वासवान् । अतः सः वस्तुस्थितिं न जानाति'' इति ।

एतदनन्तरं विश्वनाथः कदाचित् भूस्वामिना एकान्ते मिलित्वा शारदकमलाभ्यां यत् अन्याय्यं क्रियमाणम् अस्ति तत्सर्वं तम् उक्त्वा – ''ग्रामप्रमुखः ग्रामरक्षकः च एतौ न इच्छतः । एतयोः दुर्व्यवहारं तौ जानीतः । यदि भवान् अङ्गीकरोति तर्हि तौ प्रत्यक्षम् आगत्य सर्वं वक्तुम् अपि सन्नद्धौ'' इति न्यवेदयत् ।

विश्वनाथस्य वचनं श्रुत्वा भूस्वामी क्षणकालं स्तब्धः । किञ्चित् विचिन्त्य सः अवदत् – ''ग्रामप्रमुखस्य ग्रामरक्षकस्य च वचने मम विश्वासः अस्ति एव । अतः ताभ्याम् अत्र आगन्तव्यं नास्ति । सत्यम् अग्निसमानम् । तत् दीर्घकालं गोपयितुं न शक्यते । अद्यैव कमलं शारदं च उद्योगात् च्यावयित्वा भवन्तम् अहं सर्वेषां कर्मचारिणां पर्यवेक्षकं करिष्यामि'' इति ।

पितामही एवं कथां श्रावयित्वा अवदत् – ''दुष्टं कृत्यं महता प्रयत्नेन गोपितं चेदपि तत् कदाचित् वा प्रकाशितं भवेत् एव । अतः उत्तमकार्यम् एव करणीयं सर्वदा । सत्यम् अग्निसमानम् इत्येतस्य तात्पर्यम् अवगतं खलु भवद्भिः ?'' इति ।

तदा सर्वे बालाः उत्साहेन अवदन् – ''आर्ये । सम्यक् एव अवगतम् अस्माभिः'' इति ।



वाचकानां कृते कथास्पर्धा (नवम्बर) - परिणामः

# भाग्यवादी पुरुषार्थवादी च



"यदि भगवान् वस्तुतः अपि मम पुरतः प्रत्यक्षीभूय वरं याचतु इति वदेत् तर्हि अहं वदेयं यत् सुखमयस्य जीवनस्य यापनाय यानि यानि वस्तूनि आवश्यकानि तानि सर्वाणि ददातु, मम जीवनं श्रमहीनं यथा स्यात् तथा करोतु इति'' इति अवदत् जगन्नाथस्य ज्येष्ठः पौत्रः ।

एतत् उत्तरं श्रुत्वा जगन्नाथः गम्भीरवदनः जातः । जगन्मोहनः कनीयांसं पुत्रं पश्यन् अवदत् - ''वत्स ! भवान् भगवन्तं किं याचेत् ?'' इति ।

कनीयान् पुत्रः किञ्चित्कालं मौनेन स्थित्वा अवदत् - ''आर्य ! यदि भगवान् वस्तुतः अपि प्रत्यक्षः भवेत् तर्हि अहं वदिष्यामि यत् योग्यां बुद्धिं योग्यं विवेकं च ददातु, कर्तव्याकर्तव्यविवेकं मयि जागरयतु, कर्तव्यस्य निर्वहणाय शक्तिं ददातु, सुखमयस्य जीवनस्य निमित्तम् एतावत् अस्ति चेत् पर्याप्तम्, अहं मार्गभ्रष्टः यथा न स्यां तथा कर्तुं सदा भवतः मार्गदर्शनं भवतु इति ।''

जगन्मोहनः उभयोः अपि उत्तरं श्रुत्वा निर्णीतवान् 'ज्येष्ठः पुत्रः भाग्यवादी अस्ति । अतः एतेन जीवने भाग्यस्य अवलम्बनं करिष्यते । कनीयान् पुत्रः पुरुषप्रयत्ने विश्वासवान्, भगवति श्रद्धावान् च । अतः सः स्वस्य जीवनं स्वयं रूपयितुं समर्थः' इति ।

अतः एव सः वृद्धं जगन्नाथं सूचितवान् यत् भाविनि काले भूमिगृहादिकं ज्येष्ठाय ददातु, कनीयसः विषये कापि चिन्ता करणीया नास्ति इति ।

तरुण शर्मा

मकान न॰ - २५, गली न॰ - १, ब्लाक - ए
सिन्धु फॉर्म रोड, मीठा पुर विस्तार
बदरपुर, नई दिल्ली - ११० ०४४



# श्वश्रूस्नुषयोः कलहः

कस्मिन् मुहूर्ते विद्यावती पतिगृहं प्रविष्टवती इति न ज्ञायते, श्वश्र्वा पार्वत्या सह प्रतिदिनं कलहः प्रवर्तते एव तस्याः । श्वश्रूः किमपि वदति चेत् स्नुषा तत् खण्डयति । स्नुषा किमपि प्रस्तौति चेत् श्वश्रूः तत् निराकरोति । प्रतिविषयं तयोः अभिप्रायभेदः । अतः गृहे आदिनं कलहः एव ।

पुष्पाणि धृत्वा सखीनां मेलनाय यदा सा प्रतिष्ठते तदा श्वश्रूः वदति – "किम् एषा विपणिः ? एतावान् अलङ्कारः किं शोभते ? कस्य मनसः आकर्षणाय एतत् सर्वम् ? न जाने, एतेन एतत् गृहं कियत्कालं मानयुक्तं तिष्ठेत् इति" इति ।

"अहम् अलङ्कारं करोमि चेत् भवत्याः असूया किमर्थम् ? यत् रोचते तत् अहं करोमि । मां वक्तुं नास्ति भवत्याः अधिकारः" इति उक्त्वा गृहात् निर्गच्छति स्म स्नुषा ।

'गृहे मधुरं सज्जीकरोतु' इति पार्वती कदाचित् वदति चेत् विद्यावती तत् निराकृत्य 'कटुखाद्यानि एव आर्यपुत्रस्य प्रियाणि' इति उक्त्वा कटुखाद्यम् एव सज्जीकरोति ।

वराकः अमरः आदिनं कृषिक्षेत्रे कार्यं कृत्वा सायं श्रान्तः सन् यदा गृहम् आगच्छति तदा तेन पत्न्या मात्रा च उच्यमानानि आक्षेपवचनानि निरन्तरं श्रोतव्यानि भवन्ति, घोरः कलहः द्रष्टव्यः भवति च । अमरः न पत्नीं बोधयितुं शक्नोति, न वा मातरम् अवगमयितुम् । अतः दयनीया दशा तस्य ।

कदाचित् सायं सः स्वस्य क्षेत्रस्य पार्श्वे उपविश्य चिन्तयन् आसीत् – एतस्याः समस्यायाः निवारणं कथम् इति । संन्यासं स्वीकुर्याम् इत्यपि चिन्तनम् आगतं तस्य मनसि । तावता तेन मार्गेण गच्छन्तौ सुहृदौ रामः भीमः च दूरात् तम् अपश्यताम् । तौ वेगेन तत्समीपम् आगत्य अपृच्छताम् – "मित्र ! किमर्थं मुखे चिन्ताभावः ? गृहं प्रति गमनाय समयः आसन्नः चेदपि किमर्थं न गतम् ? का चिन्ता भवतः ?" इति ।

तदा अमरः स्वस्य गृहस्य स्थितिं विस्तरेण निवेद्य अवदत् – ''एतस्याः समस्यायाः परिहारः एव नास्ति । किं करवाणि ? तदास्तां तावत् । भवन्तौ क्व गच्छन्तौ स्तः ?'' इति ।

तदा रामः अवदत् – ''पार्श्वग्रामे नाटक-प्रदर्शनं भविष्यति । आवाम् अपि तत्र पात्र-धारिणौ । रामनवम्यां भविष्यति प्रदर्शनम् । अभ्यासार्थं तत्र गच्छन्तौ स्वः'' इति ।

ततः भीमः अवदत् – ''मित्र ! भवतः समस्या अपरिहार्या तु सर्वथा न । अचिरात् एव ताम् अहं परिहरिष्यामि । अतः अलं चिन्तया'' इति ।

''भीमेन समस्यापरिहारकार्यम् अङ्गीकृतं चेत् तत् सिद्धं भविष्यति एव । निश्चिन्तः भवतु भवान्'' इति अवदत् रामः ।

ततः सप्ताहः अतीतः । पूर्णिमारात्रिः सा । अमरस्य गृहे सर्वे निद्रायां मग्नाः आसन् । तावता गृहस्य पृष्ठभागतः कश्चन कलकल-ध्वनिः श्रुतः । विद्यावती पार्वती च तं शब्दं श्रुतवत्यौ । आश्चर्यं प्राप्तवत्यौ ते द्वारम् उद्घाट्य गृहस्य पृष्ठभागं गतवत्यौ ।

तत्र कूपस्य पार्श्वे उभे पिशाच्यौ उपविष्टे आस्ताम् । ते कञ्चित् आभरणग्रन्थिं गृहीत्वा सम्भाषणं कुर्वत्यौ आस्ताम् । एतत् दृश्यं दृष्ट्वा श्वश्रूः स्नुषा च चीत्कारं कर्तुम् उद्युक्ते । किन्तु भीतिकारणतः तयोः मुखात् कोऽपि शब्दः न निर्गतः ।

ते दृष्ट्वा पिशाच्यौ उक्तवत्यौ – ''अयि भोः, अलं भीत्या । यथा मानवेषु तथा पिशाचेषु अपि उत्तमाः भवन्ति एव । आवाम् अपि तादृश्यौ । यस्मिन् गृहे श्वश्रूस्नुषयोः कलहः न स्यात् तादृशं गृहम् अन्विष्यन्त्यौ



स्वः आवाम् । तस्मै गृहाय आवाम् एतम् आभरणग्रन्थिं दातुम् इच्छावः । समग्रे ग्रामे आवाभ्याम् अन्विष्टम् । तथापि कलहरहितं गृहं न प्राप्तम् । एतस्मिन् ग्रामे तादृशं गृहम् एकमपि नास्ति इति भाति'' इति ।

तदा पार्वती कथमपि आत्मनि धैर्यं प्रपूर्य ते पिशाच्यौ अपृच्छत् – ''एषः आभरणग्रन्थिः भवतीभ्यां कुतः प्राप्तः ?'' इति ।

तदा तयोः अन्यतरा पिशाची अवदत् – ''सा च महती कथा काचित् । परह्यः रात्रौ आवाम् अरण्ये सञ्चारं कुर्वत्यौ आस्व । तदा उभौ चोरौ दृष्टौ । तौ आवां दृष्ट्वा भीत्या हस्तस्थम् आभरणग्रन्थिं तत्रैव पातयित्वा पलायनं कृतवन्तौ'' इति ।

तदा विद्यावती अपृच्छत् – ''एवं प्राप्तः धनग्रन्थिः भवतीभ्यां निर्धनेभ्यः दातव्यः आसीत् खलु ? किमर्थं कलहम् अकुर्वत्योः श्वश्रू-स्नुषयोः कृते दातुम् इष्यते ?'' इति ।

तदा अपरा पिशाची अवदत् – ''यथा भवत्यौ तथैव आवाम् अपि अल्पाल्पविषयान् अधिकृत्य कलहं कुर्वः स्म पूर्वजन्मनि । आवयोः गृहस्य पुरतः एकं प्रार्थनामन्दिरम् आसीत् । कश्चन योगी तत्र वसन् ध्यानं करोति स्म । आवयोः कलहस्य कारणतः सदा तस्य ध्यानस्य भङ्गः भवति स्म । कदाचित् आवयोः व्यवहारतः नितरां क्रुद्धः सः शापं दत्तवान् – 'पिशाच्यौ भवतां भवत्यौ' इति । तस्मात् नितरां खिन्ने पश्चात्तापदग्धे च आवां तस्य पादौ गृहीत्वा क्षमां प्रार्थितवत्यौ । तदा सः योगी अवदत् यत् परस्परप्रीत्या व्यवहरन्त्योः श्वश्रूस्नुषयोः साहाय्यं कृतं चेत् भवत्यौ शापात्



मुक्ते भविष्यतः इति'' इति ।

''एषः आभरणग्रन्थिः किम् आवयोः कृते भवतीभ्यां दीयेत ?'' इति पृष्टवती विद्यावती ।

''अवश्यं दीयेत । किन्तु तदर्थं भवतीभ्यां किञ्चित् कार्यं करणीयं भविष्यति'' इति अवदत् पिशाची ।

''किं तत् कार्यम् ?'' इति कुतूहलेन पृष्टवत्यौ श्वश्रूः स्नुषा च ।

''अग्रिमे पूर्णिमादिने एतम् आभरणग्रन्थिं स्वीकृत्य पुनः अत्र आगमिष्यावः आवाम् । भवत्योः व्यवहारं परिशीलयिष्यावः अपि । व्यवहारे परस्परादरः, भवत्योः मधुरः सम्बन्धः च यदि स्यात्, तच्च परिवर्तनम् आभरणग्रन्थिनिमित्तम् एव यदि न स्यात् तर्हि एतम् आभरणग्रन्थिं दास्यावः । तावत्पर्यन्तं भवत्योः व्यवहारविषये विशेषदृष्टिं स्थाप-

यिष्यावः अपि । प्रातःकालः आसन्नः अस्ति । भवत्यौ स्वकार्याय गच्छताम् । आवाम् अपि इतः निर्गमिष्यावः'' इति उक्तवत्यौ ते पिशाच्यौ ।

श्वश्रूः स्नुषा च एतत् अङ्गीकृत्य परस्पर-हस्तग्रहणपूर्वकं गृहस्य अन्तः गतवत्यौ । तयोः निर्गमनानन्तरं द्वारं पिधाय पिशाच्यौ अपि अदृश्यतां गतवत्यौ ।

अनन्तरदिनतः श्वश्रूः स्नुषा च परस्परं प्रेम्णा व्यवहारम् आरब्धवत्यौ । गृहे कलहः सर्वथा विलयं गतः । तयोः व्यवहारे जातं एतत् परिवर्तनं दृष्ट्वा अमरः आश्चर्यचकितः जातः । महान्तम् आनन्दं प्राप्तवान् सः ।

एवमेव त्रिंशत् दिनानि अतीतानि । पुनरपि पूर्णिमादिनम् आगतम् । श्वश्रूः स्नुषा च पिशाच्यौ प्रतीक्षमाणे स्थितवत्यौ । आभरण-ग्रन्थिप्राप्तेः महती निरीक्षा तयोः । समग्रा रात्रिः अतीता । तथापि पिशाच्यौ तु न उपस्थिते एव ।

एतत् दृष्ट्वा पार्वती विद्यावतीं खेदेन अवदत् - ''पिशाच्यौ उक्तवत्यौ आस्तां यत् भवत्योः प्रेमपूर्णः व्यवहारः भवेत् इति । मया भवत्यां यद्यपि प्रीतिः दर्शिता तथापि सा सर्वदा निष्कपटा एव आसीत् इति न । क्वचित् तत्र कृत्रिमता अपि आसीत् । एतत् पिशाचीभ्याम् अवगतम् इति भाति । अतः ते प्रायः न आगते'' इति ।

''ममापि सा एव स्थितिः आसीत् । तत् आस्तां तावत् । आभरणप्राप्तिः भवेत् वा न वा । तत् विस्मराव आवाम् । इतः परम् आवां वस्तुतः अपि प्रेम्णा परस्परविश्वासेन च व्यवहराव । मासं यावत् आवयोः व्यवहारः सुमधुरः आसीत् । सन्तोषदायकः च आसीत् । एतादृशः सन्तोषः किमर्थं त्यक्तव्यः ? अग्रे अपि कलहं विना एव वसाव'' इति अवदत् विद्यावती ।

''युक्तम् एव एतत्'' इति उक्तवती स्नुषाम् पार्वती ।

पार्श्वप्रकोष्ठे एव शयितः अमरः एतयोः एतत् सम्भाषणं पूर्णतः श्रुतवान् । मातरि पत्न्यां च जातं परिवर्तनं दृष्ट्वा सः नितरां सन्तुष्टः । सः सर्वथा न जानाति स्म यत् तस्य सुहृदौ एव पिशाचीरूपेण व्यवहरन्तौ श्वश्रू-स्नुषयोः कलहं दूरीकृतवन्तौ इति ।





# भल्लूकमान्त्रिकः

## १९

*[ राजा जितकेतुः उद्घोषितवान् यत् यः मायामर्कटाय मन्त्रदण्डम् आनीय दास्यति तस्मै दत्तकरूपेण स्वीकरिष्यमाणा पुत्री, अर्धराज्यं च दास्यते मया इति । दुर्गभित्तेः उपरि मायामर्कटं दृष्टवान् भिल्लतरुणः कोपेन तम् उद्दिश्य वेगेन बाणं प्रयुक्तवान् । मायामर्कटः तम् एव बाणं हस्तेन गृहीत्वा कालीवर्मभल्लूकमान्त्रिकयोः दिशि क्षिप्तवान् । तदनन्तरम् ...]*

बाणस्य प्रहारस्य प्राप्तितः पूर्वम् एव मायामर्कटः उच्चस्वरेण उक्तवान् आसीत् खलु – 'मम मन्त्रदण्डः क्व गतः ?' इति । एतत् भल्लूकमान्त्रिकः अपि श्रुतवान् अन्ये इव ।

सः कालीवर्माणम् अवदत् – ''एतत् वचनं भवता अपि श्रुतं खलु ? मायामर्कटस्य हस्ते स्थितः मन्त्रदण्डः कुत्रापि विनष्टः, केनचित् चोरितः वा । एवं ननु ?'' इति ।

तदा कालीवर्मा अवदत् – ''गुरुवर्य ! कोऽपि मायामर्कटस्य हस्ते स्थितं मन्त्रदण्डं चोरितवान् इति तु सत्यम् एव स्यात् । किन्तु सः चोरः कः इति तु न ज्ञायते । ज्ञातुं क्लेशः अपि अस्ति । दुर्गप्रवेशं विना तादृशस्य अन्वेषणं कर्तुम् अपि न शक्यते । दुर्गद्वारं तु लोहमयम् अस्ति इत्यतः तस्य भञ्जनं दाहनं वा सर्वथा न सुकरम् । राज्ञः दुर्मुखस्य दुर्गस्य द्वारं तु काष्ठमयम् आसीत् । अतः वयम्



अग्निना दग्ध्वा लीलया तत् दुर्गं प्रविष्टवन्तः । अत्र तु तथा कर्तुं न शक्यते । अतः मार्गान्तरम् एव चिन्तनीयम्'' इति ।

एतत् श्रुत्वा भल्लूकमान्त्रिकः अवदत् - ''अद्य वयं दुर्गात् बहिः एव शिबिरं निर्माय रात्रिम् अत्र एव यापयाम । दुर्गस्य द्वारस्य भञ्जनादिकं करणीयं चेत् कः वा उपायः अस्माभिः आश्रयणीयः इति शान्ततया अग्रे चिन्तयाम'' इति ।

दूरात् एव एतत् श्रुतवान् राक्षसः उग्रदण्डः - ''मम एषा शिलगदा दुर्गद्वारं न भञ्जयेत् नाम, किन्तु सा दुर्गभित्तिं तु अवश्यं भञ्जयेत्'' इति उक्त्वा गदाम् उन्नीय बलात् दुर्गभित्तिं प्रहृतवान् । एतस्मात् भित्तिस्थाः पञ्चषाः शिलाः चूर्णीभूय अधः पतिताः । एतत् दृष्टवन्तः दुर्गभित्तिस्थाः सैनिकाः उग्रदण्डं लक्ष्यीकृत्य बाणान् प्रयुक्तवन्तः ।

भल्लूकमान्त्रिकः उग्रदण्डम् उद्दिश्य - ''मित्र । अलम् एतादृशेन साहसेन'' इति उक्त्वा कालीवर्माणम् उद्दिश्य अवदत् - ''कालीवर्मन् ! मम तु भाति यत् कोऽपि मान्त्रिकः एव मायामर्कटस्य हस्ते स्थितं मन्त्रदण्डं चोरितवान् स्यात् इति'' इति ।

राजभवनस्य पुरतः भल्लूकस्य प्रहारात् भीतस्य मायामर्कटस्य हस्तात् पतितं मन्त्रदण्डं वस्त्रग्रन्थौ निक्षिप्तवन्तौ विरागियुवकौ, नगरात् बहिः स्थितस्य कासारस्य तीरे उपविश्य ध्याने निमग्नस्य गुरुवर्यस्य आश्रमं प्रति प्रस्थितवन्तौ ।

ज्येष्ठः शिष्यः मन्त्रदण्डं हस्तेन गृहीत्वा परीक्षमाणः अवदत् - ''मित्र ! गुरवे दानात् पूर्वम् एतस्य मन्त्रदण्डस्य सामर्थ्यस्य परीक्षणं वरं खलु ?'' इति ।

कनीयान् शिष्यः एतं प्रस्तावम् अङ्गीकृतवान् । ततः ज्येष्ठः शिष्यः मन्त्रदण्डम् उन्नीय - ''अह्राम्, ह्रीम्, उह्रूम् । निधिद्वारम् उद्घाट्यताम्'' इति वदन् मन्त्रं जपन् तेन मन्त्रदण्डेन भूमिं प्राहरत् ।

तस्मात् यः शब्दः उत्पन्नः तस्य कारणतः ध्यानभङ्गं प्राप्य नेत्रे उन्मीलितवान् गुरुः विरागी - ''मयि भैरवविरागिणि स्थिते, अशुद्धमन्त्रोच्चारणं केन कृतम् ? सः पापी क्व ? तम् अहम् इदानीं भस्मसात्करिष्यामि'' इति वदन् पित्तलरजतपुष्पैः अलङ्कृतं स्वस्य दण्डम् उन्नीतवान् ।

गुरोः एतत् वचनं श्रुत्वा तौ उभौ अपि शिष्यौ नितरां भीतौ । किन्तु अत्रान्तरे तेन शिष्येण यत्र मन्त्रदण्डेन प्रहृतं तत्र भूमिः

विदीर्णा जाता । कश्चन उत्सः तत्र दृष्टिगोचरः अभवत् । उत्सं दृष्ट्वा तौ शिष्यौ आश्चर्येण स्तब्धौ । उत्सरूपेण उद्गतस्य जलस्य काचित् मुसलाकारिका धारा गुरोः उपरि पतिता ।

भैरवविरागी 'जय गुरुप्रभो !' इति सकृत् उद्घोष्य उत्थाय – 'विना मेघदर्शनम् एषा वृष्टिः कथम् आरब्धा ?' इति स्वगतम् उक्त्वा दूरे दृश्यमानौ शिष्यौ उद्दिश्य – ''भूमितः आकाशं प्रति एषा जलधारा उद्गच्छन्ती दृश्यते ! महते आश्चर्याय एव एतत्'' इति अवदत् ।

एतत् श्रुत्वा ज्येष्ठः शिष्यः आत्मनि धैर्यं प्रपूर्य अवदत् – ''भैरवगुरुवर्य ! आवां स्वस्य मन्त्रशक्तेः साहाय्येन एतां जलधारां सृष्टवन्तौ स्वः । आवयोः अध्ययनं समाप्तं ननु ?'' इति ।

भैरवगुरुः आश्चर्येण पश्यन् शिष्ययोः समीपम् आगत्य ज्येष्ठशिष्यस्य हस्ते स्थितं मन्त्रदण्डं दृष्ट्वा अपृच्छत् – ''एषः कुतः प्राप्तः भवता ? एषः मन्त्रदण्डः इव परिलक्ष्यते !'' इति ।

''गुरुवर्य ! एषः मन्त्रदण्डः इव नास्ति, अपि तु मन्त्रदण्डः एव अस्ति । आवां त्रीन् शब्दान् उच्चार्य निधिद्वारस्य उद्घाटनम् आदिष्टवन्तौ । किन्तु ततः एषा पातालगङ्गा उद्गता'' इति अवदत् ज्येष्ठः शिष्यः ।

भैरवगुरुः शिष्यस्य हस्तात् मन्त्रदण्डं स्वीकृत्य इतस्ततः परिवर्त्य परीक्ष्य अपृच्छत् – ''एषः मन्त्रदण्डः केनचित् मान्त्रिकेण निरन्तरं ध्रियते स्म आ बहोः कालात् । अतः एव एतस्मिन् मसृणता दृश्यते । एषः कुतः प्राप्तः



भवता ? किम् एषः कुतश्चित् चोरितः ? सः मान्त्रिकः कुत्र अस्ति ?'' इति ।

कनिष्ठं शिष्यं 'मौनेन स्थातव्यम्' इति सङ्केतेन संसूच्य ज्येष्ठः शिष्यः अवदत् – ''गुरुवर्य ! झटिति एव अस्माभिः एषा जल-धारा अवरोद्धव्या । अन्यथा अल्पे एव काले समग्रः नगरप्रदेशः जले निमग्नः भवेत्'' इति । ततः सः मन्त्रदण्डम् उन्नीय – ''अये मन्त्रदण्ड ! एतां जलधारां स्थगयतु'' इति आज्ञापितवान्, दण्डेन भूमिं पुनरपि प्रहृतवान् च ।

एतेन भूमिः सशब्दं विदीर्णा जाता । यत्र शब्दः उत्पन्नः तत्र खातः उत्पन्नः । एतत् दृष्ट्वा भैरवगुरुः उत्साहेन अवदत् – ''अयि शिष्यौ ! भवन्तौ केनचित् प्रकारेण एतत् प्राप्तवन्तौ स्याताम् । तथापि अपूर्वम् एव उपायनम् आनीतं भवद्भ्याम् । भवतोः



गुरुभक्त्या अहं नितरां सन्तुष्टः अस्मि । जलधारा इदानीं स्थगिता अस्ति । प्रायः निधेः द्वारम् उद्घाटितम् अस्ति । अतः भवन्तौ अधः गत्वा निधिः कुत्र अस्ति इति अन्वेष्टुम् अर्हतः'' इति ।

कनिष्ठः शिष्यः मन्त्रदण्डं सन्देहेन पश्यन् अवदत् - ''गुरुवर्य ! मन्त्रदण्डे विश्वस्य वयम् अपायगर्तं प्रविशन्तः स्मः इति भाति मम । अस्माभिः निधिद्वारस्य उद्घाटनम् इष्टम् । किन्तु उद्गता तु जलधारा ! अतः निधिः प्राप्येत उत न इति सन्देहः अस्ति एव मम'' इति ।

एतत् श्रुत्वा भैरवगुरुः शिष्यस्य हस्तात् मन्त्रदण्डं स्वीकृत्य पुनरपि परीक्षमाणः चिन्तने निमग्नः जातः ।

तदा ज्येष्ठः शिष्यः उच्चैः हसित्वा अवदत् - ''गुरुवर्य ! एतस्य मन्त्रदण्डस्य महिमा कः इति भवता न ज्ञातम् । एतं मन्त्रदण्डं यः मायामर्कटाय अर्पयिष्यति तस्मै अर्धराज्यं राजकुमारी च दास्यते इति राज्ञा जितकेतुना घोषितम् अस्ति । अतः सामान्यः मन्त्रदण्डः एषः सर्वथा न'' इति ।

अर्धराज्यं राजकुमारी च प्राप्स्यते इत्येतत् श्रुत्वा महता उत्साहेन अवदत् भैरवगुरुः - ''अयि शिष्यौ ! एतत् रहस्यम् एतावत्पर्यन्तम् अपि किमर्थं मां न उक्तवन्तौ भवन्तौ ? अर्धराज्यम् अहं स्वीकरिष्यामि । राजकुमारी भवतोः अन्यतरेण परिणीता भवतु । किन्तु अत्र अवधातव्यः अंशः कश्चन अस्ति । राजानः न विश्वासार्हाः । यत् उच्यते तदनुगुणम् एव तैः करिष्यते इति नास्ति । यदि राजा अस्मत्तः मन्त्रदण्डं स्वीकृत्य अस्माकं शिरश्छेदं कारयेत् तर्हि वयं किं वा कर्तुं शक्नुयाम ?'' इति ।

एतत् श्रुतवतोः शिष्ययोः मनसि अपि भावना उत्पन्ना यत् राजानः न विश्वासार्हाः इति । अतः कनिष्ठः शिष्यः ज्येष्ठस्य हस्त-साहाय्येन खातस्य अन्तः प्रविश्य सर्वं परिशील्य उच्चस्वरेण अवदत् - ''गुरुवर्य ! अत्र सुरङ्गः सोपानमार्गः चापि अस्ति इति भाति । अतः मन्त्रदण्डेन निधेः द्वारम् उद्घाटितम् अस्ति इत्यत्र सन्देहः एव नास्ति'' इति ।

गुरुः भैरवः उत्साहेन खातसमीपम् आगत्य - ''अयि शिष्यौ ! सौभाग्येन यदि अस्माभिः निधिः प्राप्येत तर्हि तावता सन्तुष्याम वयम् । शान्ततया चिन्तयित्वा मन्त्रदण्डः राज्ञे अर्पणीयः वा न वा इति

कालान्तरे निर्णयाम'' इति उक्त्वा ज्येष्ठेन शिष्येन सह सुरङ्गस्य अन्तः गमनाय उद्युक्तः जातः ।

गुरुः शिष्यौ च सोपानपङ्क्तिम् अनुसरन्तः सुरङ्गस्य मूलभागं गतवन्तः । तलभागः जलेन आवृतः आसीत् । जलस्य मध्ये एव पदानि स्थापयन्तः ते अग्रे गतवन्तः । किञ्चिदग्रे तैः कश्चन प्रकाशः दृष्टः ।

तं शिष्ययोः कृते प्रदर्शयन् भैरवगुरुः महता उत्साहेन अवदत् – ''तत्र यः प्रकाशः दृश्यते सः मणिमाणिक्यादिनिधेः एव । एतादृशं निधिं कश्चन यक्षः रक्षति प्रायः । यदि इदानीं कोऽपि यक्षः उपस्थितः भवेत् तर्हि किं करवाम ?'' इति ।

''एतद्विषये भवान् एव अस्माकं मार्ग-दर्शकः'' इति विनयेन गुरुम् अवदत् ज्येष्ठः शिष्यः ।

''गुरुणा बोधितस्य मन्त्रस्य अवगमने भवता विशेषप्रयासः कृतः स्यात्, तथापि भवतः सामान्यज्ञानं तु सर्वथा शून्यम् । येन मन्त्रदण्डेन निधिस्थलं दर्शितं सः मन्त्रदण्डः किं सामान्यः भवितुम् अर्हति ? एतेन यदि यक्षः सकृत् स्पृश्येत तर्हि सः क्षणमात्रेण इतः पलायनं कुर्यात्'' इति अवदत् कनिष्ठः शिष्यः ।

''अये शिष्योत्तम ! युक्तम् उक्तं भवता । मम उपदेशः सफलः । भवान् अग्रे गच्छतु तावत्'' इति अवदत् भैरवगुरुः मन्त्रदण्डेन पुरोभागं दर्शयन् ।

तस्मिन् एव समये सुरङ्गस्य ऊर्ध्वभागतः भूमेः कम्पनं जातम् इव । गजस्य घीङ्कारः



अपि श्रुतः । तस्मात् ते द्वित्रान् क्षणान् निश्चलतया स्थितवन्तः ।

द्वित्रक्षणानन्तरं भैरवगुरुः अवदत् – ''अयि शिष्यौ ! वटवृक्षस्य समीपे गजसमूहेन, गजसेनया वा आगतं स्यात् । यदि ते सुरङ्ग-मार्गस्य अन्तः आगच्छेयुः तर्हि अपायः एव अस्माकम्'' इति ।

''भवान् अस्ति अस्माकं गुरुः । अतः भवता एव एतस्याः समस्यायाः परिहारोपायः चिन्तनीयः'' इति विनयेन अवदत् ज्येष्ठः शिष्यः ।

तदा कनिष्ठः शिष्यः हसन् अवदत् – ''गजाः कथं वा खातं प्रविश्य अत्र आगन्तुं शक्नुयुः ? गजारूढानाम् अपि खातस्य अन्वेषणात् ऋते किम् अन्यत् कार्यं नास्ति ? पुरतः दृश्यमानस्य रत्नराशेः विषये इदानीं चिन्तनं भवतु । अन्येषु विषयेषु चिन्तनेन

किम् ?'' इति ।

यावत् तस्य वचनं समाप्तं तावता मृत्तिका-पिण्डं किञ्चन तेषां पुरतः सशब्दम् अपतत् । एतस्मात् भीतौ शिष्यौ गुरुः च ततः पलायनं कृतवन्तः ।

तस्मिन् एव समये सुरङ्गमार्गस्य उपरि कासारतीरे शिबिरस्य व्यवस्थापनाय योग्यं स्थलम् अन्विष्यन्तौ वधकभल्लूकः भिल्ल-तरुणः च गजम् आरुह्य सञ्चारं कुर्वन्तः आसन् । तदवसरे गजस्य पादः गर्ते पतितः । तस्मात् वधकभल्लूकः भिल्लयुवकः च गजात् अवतीर्णौ । गजश्च शुण्डया भूमिं नुदन् उदतिष्ठत् ।

वधकभल्लूकः परितः दृष्टिं प्रसार्य सर्वं परिवीक्ष्य भिल्लयुवकम् अवदत् - ''काली-वर्मा भल्लूकमान्त्रिकः च सकृत् एतं परिसरं पश्यतः चेत् वरं भवेत् । अत्र जलस्य अभावः तु नास्ति । राज्ञः जितकेतोः यत् दुर्गम् अस्माभिः आक्रान्तुम् इष्यते तदपि इतः अनतिदूरे एव अस्ति । मन्त्रतन्त्रनिपुणः मायामर्कटः यदि अत्र कदाचित् आगच्छेत् तर्हि दूरात् एव सः अभिज्ञातुं शक्येत । तं गृहीत्वा भल्लूकमान्त्रिकस्य मन्त्रदण्डं तस्मात् वशीकर्तुम् अपि शक्येत । अतः एतत् एव शिबिराय योग्यम्'' इति ।

भिल्लतरुणः गजं परितः भ्रमणं कृत्वा गजस्य पादस्य कापि हानिः न जाता इति दृढीकृत्य वधकभल्लूकम् अवदत् - ''वधक-भल्लूकवर्य ! अस्माकं वाहनभूतस्य गजस्य कापि हानिः न जाता । वयं भाग्यशालिनः स्मः'' इति ।

अनन्तरक्षणे एव वटवृक्षस्य शाखातः उत्प्लुत्य कश्चन योधः अधः आगतः । सः अवदत् - ''कपटः विरागी येन सुरङ्गमार्गेण गतः तस्मिन् गर्ते यदि भवतोः गजः अपतिष्यत् तर्हि तस्य मरणं प्रायः निश्चितम् अभविष्यत् । तदा भवतोरपि मरणं निश्चयेन अभविष्यत्'' इति ।

एतत् श्रुत्वा वधकभल्लूकः परशुम् उन्नीय - ''जय शिरीषभैरव !'' इति सकृत् उद्घोष्य - ''अये ! कः भवान् ? मायामर्कटस्य शिष्यः तु न स्यात् खलु भवान् ?'' इति पृच्छन् तस्य योधस्य समीपम् आगच्छत् ।

- *(अनुवर्तते)*



# वेताल-कथा

## युवराजस्य निर्णयः

दृढव्रती त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथा-पूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! दर्शनमात्रेण भवान् जनान् स्वाधीनीकर्तुम् अर्हति । भवतः नेत्रे रक्ते भवतः चेत् शत्रवः भयेन कम्पन्ते । एतादृशः भवान् दयनीयाम् अवस्थाम् आपन्नः सन् घोरे श्मशाने किमर्थम् एवम् अटति ? का एषा दुर्गतिः भवतः ? महाराजः भवान् कश्चन सामान्यः सेवकः इव जातः अस्ति । कियत्कालम् एषा दशा ? राजा सर्वदा विवेकी भवेत्, पराक्रमशीलश्च स्यात् । किन्तु क्व



गता भवतः पराक्रमशीलता ? क्व वा गतः भवतः विवेकः ? उचितानुचितप्रज्ञा किं भवतः सर्वथा विनष्टा ? किं भवान् अपि युवराजः दिनकरवर्मा इव व्यवहरेत् ? सुन्दर्याः राजकुमार्याः कस्याश्चित् सौन्दर्येण वशीभूतः सः प्राज्ञेन आस्थानज्योतिषिकेण पित्रा च निषिध्यमानः अपि तस्याः परिणये मतिं कृतवान् । भवतः मार्गायासस्य परिहारार्थं तस्य युवराजस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

सञ्जीविनीराज्यस्य राजा कमलभद्रः । दिनकरवर्मा तस्य एकमात्रपुत्रः । सः क्षत्रियोचितासु विद्यासु इव अन्येषु शास्त्रेषु अपि निपुणः आसीत् । 'एतादृशः युवराजः अस्माभिः न दृष्टः, न वा श्रुतम् एतादृशस्य नाम' इति जनाः तस्य प्रशंसां कुर्वन्ति स्म । अतः राजा अचिन्तयत् यत् राज्यस्य निर्वहणस्य भारम् एतस्मिन् आरोप्य मया तु विश्रान्तिजीवनं यापनीयम् इति ।

तेषु एव दिनेषु उषापुर्याः राजदूतः रञ्जितशर्मा राज्ञः दर्शनार्थम् आगतः । सिंहासनस्य पार्श्वे उपविष्टवन्तं युवराजं पुनः पुनः पश्यन् सः - ''महाराज ! उषापुर्याः राजा स्वस्य पुत्रीं मधूलिकां युवराजाय दिनकरवर्मणे दातुम् इच्छति । एतत् निवेदयितुम् एव अहम् अत्र आगतः अस्मि । अस्माकं राजकुमारी अनुपमसुन्दरी । सकृत् दृष्टवान् कोऽपि तरुणः तस्याः परिणयं न निराकुर्यात् । किम् अधिककथनेन मम ? भवान् एव तस्याः सौन्दर्यं स्वयं पश्यतु तावत्'' इति वदन् राजकुमार्याः मधूलिकायाः चित्रं जन्मकुण्डलीं च राज्ञे कमलभद्राय अर्पितवान् ।

चित्रस्थायाः मधूलिकायाः अपूर्व सौन्दर्यं दृष्ट्वा राजा नितराम् आश्चर्यचकितः । तस्याः विशाले नेत्रे, चम्पकसदृशी नासिका, मुखे प्रसृतः मन्दहासः इत्यादयः चित्ताकर्षकाः आसन् । मानवरूपिणी गन्धर्वकन्या इव आसीत् सा । किञ्चित्कालं दृष्ट्वा सः तत् चित्रं युवराजाय दत्तवान् । जन्मकुण्डली च तेन आस्थानज्योतिषिकाय दत्ता । निर्निमेषं तत् चित्रमेव पश्यन्तं युवराजं दृष्ट्वा राजा मन्दहासं प्रकटितवान् ।

आस्थानज्योतिषिकः जन्मकुण्डलीं पूर्णतः परिशील्य दीर्घं निःश्वस्य अवदत् - ''महाराज ! क्षन्तव्यः अहम् । यदि अस्माकं युवराजः मधूलिकां परिणयेत् तर्हि मासाभ्यन्तरे सर्प-

दंशेन मरणं प्राप्नुयात्'' इति ।

एतत् श्रुत्वा युवराजः क्षणकालं स्तब्धः । ततः सः आत्मानं निगृह्य अवदत् - ''मृत्युकालः सन्निहितः चेत् केनचित् वा रूपेण मरणं भवेत् एव । जन्मकुण्डलीं निमित्तीकृत्य एतादृश्याः सुन्दर्याः परिणयस्य निराकरणम् अविवेकद्योतकं स्यात्'' इति ।

महाराजः अवगतवान् यत् मधूलिकायाः सौन्दर्येण युवराजः वशीकृतः अस्ति इति । राजदूतः किङ्कर्तव्यतामूढः सन् अतिष्ठत् । 'स्वस्य निर्णयं यथाशीघ्रं ज्ञापयन्तु' इति उक्त्वा ततः निर्गतवान् सः ।

कानिचन दिनानि अतीतानि । अथ कदाचित् युवराजः मृगयार्थम् अरण्यं गतवान् आसीत् । मध्याह्नपर्यन्तं मृगयां कृत्वा नितरां श्रान्तः सः सरोवरतीरे सर्वैः सह उपविश्य भोजनम् अकरोत् । भोजनानन्तरं कस्यचित् वृक्षस्य अधः सः शयनम् अकरोत् । अत्रान्तरे आहारान्वेषी शाखास्थः कश्चन महान् अजगरः युवराजस्य उपरि अपतत्, तं पूर्णतः आवृत्य अगृह्णात् च ।

एतत् घोरं दृश्यं दृष्ट्वा सर्वे सैनिकाः नितरां भीताः । ते उच्चैः हाहाकारम् अकुर्वन् । राजकुमारः कथं रक्षणीयः इति तैः सर्वथा न ज्ञातम् ।

यदि अजगरम् उद्दिश्य शूलादिकं क्षिप्येत, बाणप्रयोगः वा यदि क्रियेत तर्हि प्रमादवशात् सः राजकुमारे लग्नः भवेत् अपि कदाचित् । तथा सति राजकुमारः प्राणैः वियुक्तः भवेत् । खड्गप्रहारस्यापि एतत् एव फलं स्यात् । अतः ते सर्वे राजकुमारस्य अपायस्थितिं पश्यन्तः



अपि अकिञ्चित्कराः जाताः ।

अत्रान्तरे कुतश्चित् केचन वेगेन बाणाः आगत्य अजगरे लग्नाः । एतस्मात् अजगरस्य शरीरं क्षतग्रस्तं जातम् । सः राजकुमारस्य ग्रहणम् अत्यजत् । इतस्ततः लुठन् मरणं प्राप्नोत् । एतस्मात् सर्वे भटाः नितरां सन्तुष्टाः जाताः ।

अल्पे एव काले सुन्दरः कश्चन रथः तत्र आगतः । धनुर्बाणहस्ता काचित् सुन्दरी तरुणी तस्मात् रथात् अवतीर्णा । तया सह काश्चन युवतयः अपि आसन् ।

तस्याः दर्शनमात्रेण एव युवराजः अवगतवान् यत् एषा सुन्दरी तरुणी एव मम प्राणान् रक्षितवती इति । सः कृतज्ञतापूर्णया दृष्ट्या ताम् अपश्यत् ।

चित्रे या मधूलिका दृष्टा तस्याः एतस्याः



च विशेषसाम्यं दृश्यते स्म ।

''अहम् अस्मि उषापुरीराज्यस्य राजकुमारी मधूलिका । सखीभिः सह विहारार्थम् एतत् वनं प्रति आगतम् आसीत् मया । भवान् कः इति किमहं ज्ञातुं शक्नुयाम् ?'' इति अपृच्छत् सा तरुणी ।

''अहं सञ्जीविनीपुरस्य युवराजः दिनकरवर्मा अस्मि । अजगरात् अहं भवत्या रक्षितः यत् तदर्थं हार्दाः धन्यवादाः'' इति मन्दहासपूर्वकम् अवदत् युवराजः ।

एतस्य श्रवणमात्रेण मधूलिका लज्जया शिरः अवनमय्य अतिष्ठत् । ततः परस्परं पौनःपुन्येन पश्यन्तौ तौ स्वराज्यं प्रति निर्गतवन्तौ ।

भाग्यवशात् युवराजः यद्यपि सर्पदंशात् संरक्षितः जातः, तथापि आस्थानज्योतिषिकस्य वचनानि महाराजस्य कर्णयोः गुञ्जन्ति स्म । मधूलिका यदि परिणीयेत तर्हि सर्पदशांत् युवराजस्य मरणं भवेत् इत्येतत् वचनं राजानं चिन्ताक्रान्तम् अकरोत् ।

ततः सप्ताहानन्तरं युवराजः विदूषकेण सह राजोद्याने विहरन् आसीत् । सूर्यास्तस्य सौन्दर्य पश्यन् सः अशोकवृक्षस्य शुष्कपर्णानां उपरि गच्छन् आसीत् । तेषां मध्ये कश्चन सर्पः स्थितः आसीत् । तत् अजानन् युवराजः तस्य सर्पस्य उपरि पादं स्थापितवान् । तस्मात् सः सर्पः क्रुद्धः सन् तम् अदशत् । दष्ट्वा ततः वेगेन निर्गच्छन्तं तं सर्पं युवराजः खड्गेन प्रहृत्य मारितवान् ।

तेन सह स्थितस्य विदूषकस्य हाहाकारं श्रुत्वा समीपस्थाः सैनिकाः धावन्तः आगतवन्तः । झटिति आस्थानवैद्यः अपि आनीतः । आस्थानवैद्यः विषनिवारकम् औषधं पाययित्वा युवराजस्य प्राणान् अरक्षत् ।

एतस्याः घटनातः महाराजेन पुनरपि ज्योतिषिकस्य वचनं स्मृतम् । मधूलिका यदि परिणीयेत तर्हि युवराजस्य मरणं भवेत् एव इति निश्चितवान् राजा ।

ततः पञ्चदशानां दिनानाम् अनन्तरम् अन्या घटना प्रवृत्ता । रात्रिभोजनं समाप्य शयनप्रकोष्ठं प्रविष्टवान् आसीत् युवराजः । तावता सेवकः क्षीरचषकम् आनीतवान्, युवराजस्य मञ्चस्य पार्श्वे स्थापिते पीठे तं स्थापितवान् च ।

युवराजः चषकस्य ग्रहणाय हस्तं प्रसारितवान् । ग्रहणं दृढं न आसीत् इत्यतः चषकः भूमौ पतितः । क्षीरम् अपि भूमौ पतितम् ।

पार्श्वे एव शयितवान् मार्जारः तत् क्षीरम् अपिबत् । क्षणाभ्यन्तरे सः धराशायी जातः । एतत् दृष्ट्वा तत्रत्याः सर्वे आश्चर्येण स्तब्धाः जाताः ।

झटिति एव आस्थानवैद्यः आनायितः । सः आगत्य क्षीरं परीक्ष्य अवदत् यत् सर्पस्य घोरं विषम् अत्र योजितम् अस्ति इति ।

क्षीरचषकस्य आनेत्रीं परिचारिकाम् आहूय राजा विचारणात् अकरोत् । ततः ज्ञातं यत् सा शत्रुपक्षीया काचित् गूढचरी अस्ति इति, युवराजस्य मारणाय एव सा परिचारिकावेषेण प्रासादं प्रविष्टवती अस्ति इति च । ततः सा कारागारे स्थापिता ।



एतस्याः घटनायाः अनन्तरं पक्षाभ्यन्तरे उषापुर्याः दूतः रञ्जितशर्मा पुनरपि आगतवान् । सः महाराजं दृष्ट्वा युवराज-मधूलिकयोः विवाहस्य प्रस्तावं पुनरपि तस्य पुरतः उपस्थापितवान् ।

एतं प्रस्तावं श्रुत्वा नितरां क्रुद्धः महाराजः अवदत् - ''युवराजमधूलिकयोः विवाहः कदाचिदपि भवितुं न अर्हति । भवता यस्मिन् दिने विवाहप्रस्तावः उपस्थापितः तदनन्तरकाले त्रिवारं युवराजः सर्पकण्टकात् ग्रस्तः जातः । किन्तु दैवम् अनुकूलकरम् आसीत् । अतः सः कथमपि रक्षितः जातः । एतस्मात् स्पष्टं यत् एतस्य सर्वस्य कारणं मधूलिकायाः जन्मकुण्डली एव इति । अतः मधूलिका मम स्नुषा भवितुं न अर्हति कदापि । कृपया एतं विवाहप्रस्तावं पुनरपि मा उपस्थापयतु'' इति ।

तदा पार्श्वे उपविष्टः आस्थानज्योतिषिकः अवदत् - ''महाराज ! युक्तम् उक्तं भवता । विवाहात् पूर्वम् एव यस्याः जन्मकुण्डली एतादृशं घोरं परिणामं जनितवती सा एव यदि परिणीयेत तर्हि युवराजस्य मरणं निश्चयेन भवेत् एव । अतः एतस्य प्रस्तावस्य तिरस्कारः एव श्रेयसे'' इति ।

राजदूतः रञ्जितशर्मा दीर्घं निःश्वस्य युवराजस्य मुखम् अपश्यत् - 'भवतः अभिप्रायः अपि किम् एषः एव ?' इति पृच्छन् इव ।

युवराजः क्षणकालस्य मौनस्य अनन्तरम् अवदत् - ''मधूलिका परिणेतव्या एव इति अहं निर्णीतवान् अस्मि'' इति । तस्य कण्ठस्वरः दृढतापूर्णः आसीत् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! युवराजः त्रिवारं सर्पाघाततः रक्षितः

जातः । तथापि तेन ज्योतिषिकस्य वचने किमर्थं विश्वासः न कृतः ? तेन विवाहः अनुमतः इत्यस्य अर्थः ज्योतिषिकस्य वचने तस्य विश्वासः नास्ति इत्येव खलु ? अनुभविना पित्रा विज्ञेन ज्योतिषिकेण च निवार्यमाणः अपि युवराजः किमर्थं मधूलिकायाः परिणये एव विशेषास्थां दर्शितवान् ? सः मोहग्रस्तः इत्येव खलु वक्तव्यं भवति अस्माभिः ? रागान्धः यक्तायुक्ततां न पश्यति इत्येतत् युक्तं खलु ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्त्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् – ''मधूलिकायाः चित्रस्य दर्शनमात्रेण एव युवराजः तस्याम् अनुरागवान् जातः । प्रत्यक्षदर्शनात् तु स च अनुरागः प्रवृद्धः । बाणप्रयोगनैपुण्यं तु तस्याः क्षत्रियकुलोचिततां दर्शयति स्म । एवं सर्वविध-दृष्ट्या अपि सा युवराजस्य परिणयाय अर्हा एव । अतः एव युवराजः तस्याः परिणये मतिं कृतवान् । ज्योतिषिकस्य वचने तेन उपेक्षा दर्शिता यत् तस्यापि किञ्चन कारणम् अस्ति । प्रथमवारं तु तेन ज्योतिषिकस्य वचने आदरः एव प्रकटितः । अतः एव मधूलिकां परिणेतुम् इच्छन् अपि सः ज्योतिषिकस्य कथनं श्रुत्वा मौनम् आश्रितवान् । तदनन्तरं तेन ज्ञातं यत् ज्योतिषिकः स्वस्य कथनस्य समर्थनाय व्यर्थ-प्रयासं कुर्वन् अस्ति इति । त्रिवारं सर्पकण्टकं सम्मुखीकृतं यत् तस्य कारणम् अपि मधू-लिकायाः जन्मकुण्डली एव इति ज्योतिषिकस्य आशयः । एतत् कथं विश्वासार्हं स्यात् ? येन सर्पकण्टकत्रयम् अभ्यूहितुं न शक्तं तेन उच्यमानं जातकफलं कथं वा विश्वासयोग्यं भवेत् ? अतः एव युवराजः ज्योतिषिकस्य वचनम् उपेक्षार्हं मतवान् । ज्योतिषिकस्य वचनम् एव प्रमाणत्वेन भावयतः पितुः वचनस्य अपालने अपि तेन मतिः कृता । सः विवेकी, धीरः, सूक्ष्मचिन्तकः च । मोहावेश-वशात् तेन न किमपि निर्णीतम् । रागान्धः सर्वथा नास्ति सः । तर्कसम्मतः एव अस्ति तस्य निर्णयः'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अव-लम्बितवान् ।






# गुहादेवालयाः

एल्लोरा, अजन्ता इत्यादिषु गुहादेवालयेषु स्थितानि भित्तिचित्राणि भवतां मनः आकृष्टवन्ति स्युः एव । कठिनासु अपि शिलासु एताः गुहाः कथं निर्मिताः स्युः इति आश्चर्यं स्यात् खलु भवताम् ?

भवन्तः कदाचित् वा विहाराय समुद्रतीरं गतवन्तः स्युः एव खलु ? जलक्रीडायाः अनन्तरं सिकताभिः नीडादिकं रचितवन्तः स्युः अपि । तदवसरे भवद्भिः आदौ सिकताराशिः निर्मितः स्यात् । ततः प्रकोष्ठादयः निर्मिताः स्युः सिकतानाम् अपनयनेन । एवमेव निर्मीयन्ते शिलागुहाः अपि । शिलागुहासु मन्दिरस्य निर्माणम् अपि एतेनैव क्रमेण भवति । इष्टिकायाः उपरि इष्टिकानां स्थापनं तत्र न भवति । भारते शिलाकर्तनपुरस्सरं गुहादीनां निर्माणस्य आरम्भः अभवत् २००० वर्षेभ्यः पूर्वम् ।



आदौ पर्वतस्थायाः शिलायाः उपरि निर्मीयमाणायाः रचनायाः बाह्यं रूपं रेखया चित्र्यते । ततः अनपेक्षितान् भागान् अपनीय रचनानिर्माणं क्रियते । आदौ ऊर्ध्वभागस्य (छदेः) निर्माणं भवति, ततः अवशिष्टाः भागाः निर्मीयन्ते । केरलमुम्बयीप्रभृतिषु स्थलेषु दृश्यमानाः गुहाः १९०० वर्षेभ्यः पूर्वं रचिताः । परस्पराभिमुखतया रचिताः अत्रत्याः स्तम्भाः चित्ताकर्षकाः सन्ति ।

अनपेक्षितान् शिलाभागान् ये अपनयन्ति ते प्रायः भवन्ति वृत्तिनिपुणाः । एवं हि विश्वस्यते यत् एल्लोरास्थं कैलासमन्दिरं निर्मितवान् शिल्पी प्रायः स्वयमपि न जानाति स्म यत् मया निर्मितं मन्दिरम् एवम् अपूर्वं भवेत् इति ।

# गर्दभः तु गर्दभः एव

जीवनसिंहः कश्चन सामान्यः वणिक् । सः तदा तदा समीपस्थं नगरं गत्वा आपणाय आवश्यकानि वस्तूनि आनयति स्म । वस्तूनाम् आनयनाय सः गर्दभस्य उपयोगं करोति स्म ।

कदाचित् सः गर्दभेन सह नगरं गतवान् । वाणिज्यार्थं सः नगरे बहुधा अटितवान् । एतस्मात् तेन महती श्रान्तिः अनुभूता । अतः कस्यचित् महावृक्षस्य अधः सः शयनं कृतवान् । अल्पे एव काले तेन निद्रा प्राप्ता ।

किञ्चित्कालानन्तरं तेन झटिति जागरणं प्राप्तम् । बालानाम् उच्चं ध्वनिम् अशृणोत् सः । तस्य श्रवणात् सः अवगतवान् यत् कश्चन मतगुरुः (मुल्लाह्) गृहे छात्रान् पाठयन् अस्ति इति । बालानां कोलाहलं श्रुत्वा मतगुरुः अवदत् - ''अहं यत् कण्ठशोषणं कुर्वन् अस्मि तस्मात् आनन्दम् अनुभवन्ति भवन्तः । भवन्तः सर्वे गर्दभाः । भवतः सर्वान् मानवान् कर्तुं प्रयासः मम । किन्तु मम एतं प्रयासं सर्वथा न अवगच्छन्ति भवन्तः'' इति ।



एतत् श्रुत्वा बालाः सर्वे मौनेन अतिष्ठन् । एतस्मात् जीवनसिंहः स्वस्य बाल्यं स्मृतवान् । तेन बाल्ये अपि विद्यालयं प्रति न गतम् एव । पितुः आपणः एव तस्य विद्यालयः । कथं वक्तव्यं, कथं व्यवहरणीयम् इत्यादिकं तं बोधयन् तस्य पिता गणनादिविषयान् अपि कांश्चित् बोधितवान् आसीत् । एतस्मात् यद्यत् वाणिज्यनिर्वाहाय आवश्यकं तत्सर्वं प्राप्तवान् आसीत् सः । किन्तु गर्दभाः मानवरूपेण परिवर्तयितुं शक्याः इत्येतत् तु तेन ऐदम्प्राथम्येन श्रुतम् आसीत् । तदीयः गर्दभः तु भारवहनात् ऋते अन्यत् किमपि कार्यं कर्तुं न अर्हति स्म । भारवहनरूपाय कार्याय बुद्धिमत्तायाः कापि आवश्यकता न आसीत् ।

मम गर्दभः अपि मानवरूपेण यदि परि-

वृत्तः भवेत् तर्हि वरं स्यात् इति विचिन्त्य जीवनसिंहः स्वस्य इच्छां मतगुरुं निवेदितवान् । एतत् श्रुत्वा मनसि एव हसितवान् सः मत-गुरुः । एषः वणिक् मन्दमतिः, धनवान् च इति अवगतवान् मतगुरुः जीवनसिंहम् अवदत् – ''भवतः गर्दभः मासत्रयम् अत्र भवतु । मासत्रयं तस्य पोषणाय यथायोग्यं धनं दातव्यं भवता । मासत्रयानन्तरम् एतं नेतुम् अर्हति भवान्'' इति ।

जीवनसिंहः एतत् अङ्गीकृत्य प्रभूतं धनं तस्मै मतगुरवे दत्त्वा प्रार्थनाङ्गीकारार्थं धन्य-वादान् समर्प्य नगरात् आनीतानि वस्तूनि स्वस्य स्कन्धे आरोप्य ततः प्रस्थितवान् । 'यावत् एषः गर्दभं न प्रतिनेष्यति तावत् अयं गर्दभः मम उपयोगाय भवेत् । एतस्य पोषणाय यावत् धनम् आवश्यकं तावत् तु सः मूर्खः वणिक् दत्तवान् अस्ति एव । अतः मया वराटिकामात्रम् अपि व्ययीकरणीयं नास्ति'' इति अचिन्तयत् मतगुरुः ।

मासत्रयानन्तरं जीवनसिंहः मतगुरोः गृहम् आगतवान् एव । तस्य विचारः आसीत् यत् एतावता मम गर्दभः दृढकायः तरुणः जातः स्यात् इति । मतगुरुः तं दृष्ट्वा मन्दहासं प्रकटयन् अवदत् – ''भवदीयः गर्दभः मम निरीक्षाम् अपि अतिरिच्य प्रवृद्धः अस्ति । तेन कुरान्-ग्रन्थस्य पङ्क्तयः अपि उच्चार्यन्ते । सुन्दरः तरुणः जातः अस्ति सः । पार्श्वग्रामस्य स्वामी एषु दिनेषु दिवं गतः । ग्रामीणाः योग्यस्य उत्तराधिकारिणः अन्वेषणं कुर्वन्तः आसन् । ते एतद्विषये मम मार्गदर्शनं प्रार्थितवन्तः । एषः मानवरूपेण परिवृत्तः गर्दभः एव ग्राम-



प्रमुखः भवतु इति सूचितं मया । ग्रामज्येष्ठाः एतं प्रस्तावम् अङ्गीकृतवन्तः । अतः ते तम् आत्मना सह नीतवन्तः'' इति ।

एतस्य श्रवणात् जीवनसिंहस्य सन्तोषः जातः । अनन्तरक्षणे खेदः अपि जातः – मम गर्दभः हस्तच्युतः जातः इति । 'यः गर्दभः मानवरूपं प्राप्तवान् सः यदि मया सह भवेत् तर्हि वाणिज्यादिषु मम महत् साहाय्यम् अभविष्यत्' इति चिन्तयित्वा सः निर्णीतवान् यत् मया पार्श्वस्थं ग्रामं गत्वा सः ग्रामप्रमुखः द्रष्टव्यः इति । ततः सः पार्श्वग्रामं प्राप्य ग्रामप्रमुखस्य गृहम् अपि प्रविष्टवान् ।

तदवसरे ग्रामप्रमुखः अन्यैः ज्येष्ठैः सह समालोचनं कुर्वन् आसीत् । तम् अपश्यत्



आसीत् इति जीवनसिंहः यत् उक्तवान् तत् श्रुत्वा उच्चैः हसितवान् ग्रामप्रमुखः ।

सः आसीत् विनोदप्रियः । अतः सः हसन् एव अवदत् - ''मित्र ! भवदीयः गर्दभः ग्राम-प्रमुखरूपेण अस्ति इति वदता मतगुरुणा अल्पः दोषः कृतः । सः इदानीम् एतस्मिन् ग्रामे मतप्रमुखरूपेण (फकीर्) तिष्ठति, न तु ग्रामप्रमुखरूपेण । अतः भवान् अस्मद्ग्रामस्य मतप्रमुखस्य समीपं गच्छतु'' इति ।

वणिक् मतप्रमुखस्य अन्वेषणाय ततः निर्गतवान् । सः मतप्रमुखः नद्याः तीरे उपविश्य प्रार्थनायां मग्नः तेन दृष्टः । यदा तस्य प्रार्थना समाप्ता तदा जीवनसिंहः तत्समीपं गत्वा अवदत् - ''अये ! पार्श्वग्रामे स्थितेन मतगुरुणा बोधिताः कुरान्पङ्क्तयः स्मर्यन्ते खलु भवता ? सः एव भवन्तं मतप्रमुखं कृतवान् । ततः पूर्वं भवान् मम गर्दभः आसीत् । अहं भवतः स्वामी आसम्'' इति ।

''अहं गर्दभः आसम् ? कथं सम्भवेत् एतत् ? मया पार्श्वग्रामस्थः मतप्रमुखः न दृष्टः एव । कुरान्पङ्क्तयः तु मया मदरसायां पठिताः । मम प्रश्नः - किं भवतः बुद्धिः सम्यक् अस्ति इति'' इति कोपमिश्रितेन स्वरेण अवदत् मतप्रमुखः ।

क्षणानन्तरं सः जीवनसिंहं पुनः अवदत् - ''भवान् भूताविष्टः पिशाचाविष्टः वा स्यात् कदाचित् । अहं तासां दुष्टशक्तीनां निवारणे समर्थः अस्मि । तदहं करिष्यामि अपि । आदौ

जीवनसिंहः । मतगुरुणा यथा उक्तं तथा तरुणः सुन्दरः वा न आसीत् ग्रामप्रमुखः । तथापि समालोचनक्रमः तु तदीयां बुद्धिमतां निरूपयति स्म ।

यदा समालोचनं समाप्तं तदा जीवनसिंहः तस्य समीपं गत्वा अवदत् - ''भोः, मां स्मरति खलु भवान् ? अहमस्मि भवतः स्वामी । भवान् मतगुरोः सकाशे स्थापितः आसीत् मया'' इति ।

एतत् श्रुत्वा ग्रामप्रमुखः न कुपितः । सः शान्ततया एव अवदत् - ''श्रीमन् ! अहमस्मि एतस्य ग्रामस्य प्रमुखः । भवान् कथं मम स्वामी भवितुम् अर्हेत् ? भवतः कथनस्य तात्पर्यं न अवगतं मया'' इति ।

समीपे एव स्थिताः ग्रामज्येष्ठाः ग्रामप्रमुखं जीवनसिंहं च कुतूहलेन पश्यन्तः आसन् ।

जीवनसिंहः मासत्रयात् पूर्वं यद्यत् प्रवृत्तं तत्सर्वं निवेद्य, प्रातः कृतं मतगुरुणा सह मेलनम् अपि श्रावितवान् । भवान् पूर्वं गर्दभः

भवान् वदतु स्वगर्दभकथाम्'' इति ।

मतप्रमुखस्य कोपं दृष्ट्वा जीवनसिंहः क्षणकालं स्तब्धः । ततः सः आत्मानं निगृह्य प्रवृत्तं सर्वं विस्तरेण तं निवेदितवान् । तस्य आशा आसीत् यत् मानवरूपेण स्थितं मम गर्दभम् एषः प्रतिदापयेत् कदाचित् इति ।

मतप्रमुखः भूमौ उपविष्टवान् । जीवनसिंहः अपि भूमौ उपाविशत् । मतप्रमुखः नेत्रे निमील्य क्षणकालम् अचिन्तयत् । ततः सः नेत्रे उन्मील्य शान्तस्वरेण जीवनसिंहम् अवदत् – ''मित्र ! यदा कश्चित् विशेषधैर्यं प्रदर्शयति तदा वयं तं वदामः यत् एषः सिंहः इति । यदा कश्चित् वक्रचातुर्थं दर्शयति तदा वयं तं वृकं शृगालं वा वदामः । वयं तु जानीमः एव यत् शूरः न सिंहः, चतुरः न शृगालः वा इति । तथापि आलङ्कारिकतया एतादृशाः प्रयोगाः क्रियन्ते । एतस्मात् जनाः अस्माकं भावं स्पष्टतया अवगच्छन्ति । मतगुरुणा अपि एतादृशी एव शैली आश्रिता । तान् बालान् बुद्धिमतः कर्तुं सः प्रयत्नं कृतवान् । किन्तु बालाः यदा आलस्यादिकं दर्शितवन्तः तदा सः तान् अवदत् – भवन्तः गर्दभाः इति । गर्दभाः मानवरूपेण परिवर्तयितुं न शक्याः । भवान् एतत्सर्वं न जानाति इत्यतः सः मतगुरुः भवन्तं वञ्चितवान् । भवतः गर्दभः इदानीम् अपि तस्य गृहे एव स्यात् । अतः भवान् तत्र गत्वा स्वस्य गर्दभं प्राप्नोतु । भगवान् भवतः मङ्गलं करोतु'' इति ।

''नितराम् उपकृतः अस्मि । मयि विवेकः जागरितः भवता'' इति उक्त्वा जीवनसिंहः उत्थितवान् ।

''मया जीवने ऐदम्प्राथम्येन केचन पाठाः पठिताः । अहं मतगुरोः गृहं गत्वा मदीयं गर्दभं प्रतियाचामि । नितरां बुद्धिहीनः अपि सः गर्दभः तु मदीयः एव । अहं बुद्धिहीनतां न आचरामि'' इति तम् अवदत् सः ।

ततः सः मतगुरोः गृहं गतवान् । यथा तेन ऊहितम् आसीत् तथैव तदीयः गर्दभः तत्रैव आसीत् । मतगुरुः गृहे न आसीत् । जीवनसिंहः स्वस्य गर्दभं बन्धनात् विमोच्य तेन सह गृहं प्रतिगतवान् ।

तस्मात् दिनात् सः गर्दभस्य उपरि भारे असति अपि तदुपरि उपवेशनं परित्यक्तवान् । गर्दभं च मित्रम् अभावयत् सः ।



# वार्ताविशेषः

## उन्नतकाययोः कथा

केचन 'अल्पाकाराः' जनाः क्वचित् 'उन्नतम् आकारम्' अपि प्राप्नुवन्ति । तादृशम् उदाहरणद्वयम् अत्र अस्ति । गट्टय्यः आन्ध्रप्रदेशीयः करीमनगरजनपदीयः रामगोण्डम्निवासी २१ वर्षीयः तरुणः । तस्य औन्नत्यम् अस्ति - ७.६ पादमितम् । सः राजनरसु-नरसम्मयोः षट्सु अपत्येषु अन्यतमः । एकादशवर्षपर्यन्तं सः सामान्यः बालः एव आसीत् । एकादशे वयसि सः महता ज्वरेण ग्रस्तः । योग्यया चिकित्सया सः स्वस्थः तु जातः । किन्तु ततः अग्रिमेषु अष्टसु वर्षेषु तस्य औन्नत्यं दिने दिने अवर्धत । वैद्याः अभिप्रायं प्रकटितवन्तः यत् एषा वृद्धिः न स्थग्यते चेत् मस्तिष्कस्य हानिः अपि भवेत् कदाचित् इति । अतः १९९६ तमे वर्षे शस्त्रचिकित्सया एषा वृद्धिः स्थगिता । केचन विद्यालयाः तस्य औन्नत्यं दृष्ट्वा - 'एषः अस्मद्विद्यालयस्य पादकन्दुकक्रीडागणे महाकन्दुकक्रीडागणे वा भवितुम् अर्हति' इति विचिन्त्य यद्यपि तस्य प्रवेशम् अनुमतवन्तः, तथापि कक्ष्यायां सः विघ्नायते स्म एव । गच्छता कालेन तेन उद्योगार्थं प्रयासः कृतः । तत्रापि तेन महत् यशः न सम्पादितम् । उन्नतस्थले स्थितानां दीपानां योजने, उन्नतभवनादीनां वर्णलेपने च तस्य उपयोगः जातः ।

३८ वर्षीयस्य जर्मनीयस्य हेराल्ड् एञ्ज्लिङ्ग्वर्यस्य कथा अन्या एव । सः यद्यपि ७.१ पादमितोन्नतः अस्ति तथापि तेन तु जीवने न किमपि कष्टम् अनुभूतम् । तेन कालिकत्नगरीया (केरलीया) शेरीना परिणीता । त्रयाणाम् अपत्यानां पिता अस्ति सः इदानीम् । हेराल्डेन यदा प्रथममेलनं जातं तदा शरीना वस्त्रोद्यमक्षेत्रे विन्यासनिर्मात्री आसीत् । हेराल्डः अपि वस्त्रोद्यमक्षेत्रीयः एव । उभयोः अपि कुटुम्बे यद्यपि महान् विरोधः आसीत्, तथापि तौ १९९३ तमे वर्षे चेन्नैनगरे विवाहितौ जातौ । हेराल्डः इदानीं स्वीयायाः एलेक्ट्रानिक्स्संस्थायाः स्वामी अस्ति । एषु दिनेषु केरलं गतः सः सर्वत्रापि अभिमानिनां गणम् एव अपश्यत् । हेराल्डः वदति यत् यः मदीय



# विदुरस्य स्नुषे

चतुर्भजपुरे विदुरः धर्मराजः चेति उभौ सुहृदौ वसतः स्म । उभौ अपि मध्यमवर्गीयौ कृषिकौ । गोपीनाथः सोमशेखरः चेति विदुरस्य उभौ पुत्रौ । धर्मराजश्च निस्सन्तानः आसीत् ।

कदाचित् धर्मराजः विदुरम् अवदत् - ''आवां वृद्धौ जायमानौ स्वः । भवतः पुत्रौ इदानीं विवाहयोग्यौ । तयोः विवाहः यदि निर्वर्त्येत तर्हि अचिरात् एव भवान् पितामहपदवीम् अपि प्राप्नुयात्, वार्धक्ये सन्तोषेण तिष्ठेत् च । अहं तु निस्सन्तानः अस्मि । कस्यचित् शिशोः दत्तकरूपेण स्वीकारम् अहं चिन्तयामि । किन्तु शिशुं दातुम् इच्छवः मम सम्पत्तिम् एव पश्यन्ति'' इति ।

तदा विदुरः धर्मराजस्य स्कन्धे प्रीत्या हस्तं स्थापयन् अवदत् - ''मित्र ! मानवः एकः एव वार्धके बन्धूनां साहाय्यं प्राप्तुम् अर्हति । अन्ये सर्वे जीविनः एतस्मात् भाग्यात् वञ्चिताः एव । अद्यावधि अहं मत्पत्नी च सुखेन स्वः । यदि स्नुषे आगच्छेतां तर्हि न जाने, किं भविष्यति इति । आवयोः सख्यस्य का गतिः इत्यपि न जानामि । यावज्जीवम् आवां भ्रातृभावेन निवसाव'' इति ।

''भविष्यस्य विषये अधिकं चिन्तनीयं नास्ति । भवतः पुत्रौ तु उत्तमौ गुणशालिनौ च । मम तु विश्वासः अस्ति यत् भवान् उत्तमे एव स्नुषे प्राप्स्यति इति'' इति अवदत् धर्मराजः ।

गोपीनाथः सोमशेखरश्च एतत् सम्भाषणं श्रुतवन्तौ । परस्परं समालोच्य तौ विदुरधर्मराजयोः समीपम् आगतवन्तौ ।

गोपीनाथः विदुरम् अवदत् - ''आर्य ! अहं मम सहोदरः च भवन्तं सदा पितृतुल्यं भावयावः । भवान् अपि आवां पुत्रौ इव एव भावयतु'' इति ।

तदा धर्मराजः गद्गदकण्ठः सन् अवदत् -



वचनं श्रूयते । एषु दिनेषु नारदकुण्डग्रामतः कश्चन विवाहसम्बन्धम् अपेक्ष्य आगतः आसीत् । तस्य ग्रामस्य प्रमुखस्य विश्वेश्वरस्य उभे पुत्र्यौ । ते अस्मद्गृहस्य स्नुषे भवेताम् इति तस्य ग्रामप्रमुखस्य इच्छा । यदि भवद्भ्यां ते दृश्येतां तर्हि वरं स्यात् । यदि ते इष्टाय जाते तर्हि तयोः परिणयः अपि भवितुम् अर्हति । निर्णयः तु भवतोः अधीनः'' इति ।

तदा गोपीनाथसोमशेखरौ उक्तवन्तौ – ''एवं तर्हि किं विलम्बेन ? वयं सर्वे गत्वा कन्ये दृष्ट्वा आगच्छाम'' इति ।

अनन्तरदिने विदुरः प्रतिवेशिग्रामप्रमुखाय वार्तां प्रेषितवान् यत् वयम् आगच्छन्तः स्मः इति ।

तदनन्तरदिने सर्वे भाटकशकटम् आरुह्य नारदकुण्डं गतवन्तः । विश्वेश्वरस्य गृहं यावत् प्राप्तं तावता विदुरस्य हृदयभागे महती वेदना उत्पन्ना । सः विश्वेश्वरस्य गृहस्य पुरतः एव भूमौ उपाविशत् वेदनाम् अनुभवन् । तेषां प्रतीक्षां कुर्वन् स्थितः विश्वेश्वरः झटिति विदुरं गृहस्य अन्तः नीत्वा शय्यायां शायितवान् । वैद्यम् आनेतुं सेवकं प्रेषितवान् च ।

वैद्यः आगत्य परीक्षां कृत्वा उक्तवान् – ''एषा वेदना महाहानिकरी तु न । तथापि एतादृशेषु विषयेषु पर्याप्ततया जागरूकता-श्रयणं श्रेयसे एव । अतः एषः मया दीयमानम् औषधं नियततया सेवताम् । सप्ताहं यावत् पूर्णविश्रामः अपि आवश्यकः । प्रयाणं किमपि न करणीयम्'' इति ।

तदा धर्मराजः विश्वेश्वरम् अवदत् – ''एवं भवेत् इति अस्मासु केनापि न चिन्तितम्

''अहं भवतोः स्वभावं सम्यक् जानामि । भवन्तौ सद्व्यवहारं करिष्यतः इत्यत्र नास्ति एव मम सन्देहः । यदि भवतः पित्रा उत्तमे स्नुषे प्राप्ते स्यातां तर्हि अहं मम पत्नी च भवताम् आश्रये सुखेन जीवनं यापयेव'' इति ।

''आर्य ! भविष्यविषये अलम् अधिक-चिन्तया । गृहं प्रति ये आगच्छतः ते यदि सहोदरे भवेतां तर्हि परस्परप्रीत्या तिष्ठेताम् इति मम आशयः । यदि ते परस्परप्रीत्या व्यवहरतः तर्हि बह्व्यः समस्याः परिहृताः भविष्यन्ति इति भाति'' इति अवदत् सोम-शेखरः ।

पुत्रयोः वचनं श्रुत्वा विदुरः पुत्रौ उद्दिश्य मन्दहासपूर्वकम् उक्तवान् – ''यदि वयं सद्विचारम् अधिकृत्य चिन्तयामः तर्हि भगवान् अपि आनुकूल्यं कल्पयिष्यति इति किञ्चन

आसीत् । एतस्मिन् ग्रामे सप्ताहं यावत् वासाय किं किमपि भाटकगृहं प्राप्येत ? कदाचित् मासं यावदपि स्थातव्यं भवेत् । तदनुगुणतया गृहस्य अन्वेषणं करणीयम्'' इति ।

यावत् विश्वेश्वरः किमपि वक्तुम् उद्युक्तः तावता तदीये पुत्र्यौ तं पार्श्वप्रकोष्ठं प्रति आहूतवत्यौ हस्तसङ्केतेन । विश्वेश्वरः तत्र गतवान् ।

तदा तस्य ज्येष्ठा पुत्री रागिणी अवदत् – ''तात ! ते विवाहप्रस्तावं निमित्तीकृत्य आगताः आसन् । अतः विदुरवर्यः अस्माकं गृहे स्थित्वा चिकित्सां प्राप्नोति चेदेव वरं भवेत् । तस्य चिकित्सायै व्यवस्थायाः उपकल्पनम् अस्माकं धर्मः'' इति ।

द्वितीया पुत्री मोहिनी अपि उक्तवती – ''भगिन्या युक्तम् एव उक्तम् । यदि विदुरवर्यः गृहे न स्थाप्येत तर्हि अपवादः श्रोतव्यः भवेत् । यः विवाहसम्बन्धः तैः इष्टः सः भवेत् वा न वा इति तु न ज्ञायते । तथापि तेषां सन्तोषः यथा स्यात् तथा व्यवहारः अस्माकं धर्मः । अतः विदुरवर्यः अत्रैव स्थित्वा चिकित्सां प्राप्नोतु'' इति ।

पुत्र्योः वचनं श्रुत्वा प्रश्नार्थकदृष्ट्या पत्न्याः मुखं दृष्टवान् विश्वेश्वरः । पुत्र्योः व्यवहारविषये सन्तोषं प्रकटयन्ती विश्वेश्वरपत्नी अवदत् – ''पुत्रीभ्याम् उचितम् एव उक्तम् । गृहम् आगतस्य अतिथेः अन्यत्र स्थापनं न शोभते इति भाति मम । इतः परं भवान् एव प्रमाणम्'' इति ।

पार्श्वप्रकोष्ठे शयानः विदुरः तिसृणाम् अपि वचनानि श्रुतवान् आसीत् एव । 'मम एतस्य आकस्मिकस्य हृदयसम्बन्धिनः अस्वास्थ्यस्य कारणतः विश्वेश्वरस्य गृहस्य सर्वेषां सदस्यानां



स्वभावस्य पूर्णः परिचयः जातः' इति सः अचिन्तयत् ।

विश्वेश्वरः पुत्र्योः पत्न्याः च वचनस्य श्रवणस्य अनन्तरं सम्यक् आलोच्य निर्णीतवान् यत् विदुराय ग्रामे अन्यत्र कुत्रचित् व्यवस्था-कल्पनम् एव उचितम् इति ।

अतः सर्वविधैः आनुकूल्यैः युक्तम् एकं गृहम् अन्विष्य तत्र विदुरस्य वासाय व्यवस्थां कल्पितवान् सः ।

विदुरः, धर्मराजः, तस्य पुत्रौ च तस्मिन् गृहे विना क्लेशं दश दिनानि वासं कृतवन्तः । तावता विदुरः स्वस्थः जातः । वैद्यः तस्य स्वास्थ्यं परीक्ष्य तृप्तिं प्रकटितवान् । ततः प्रतिगमनसमये धर्मराजः विदुरम् अवदत् - ''वयं विश्वेश्वरवर्यं कृतज्ञतावचनानि उक्त्वा इतः निर्गच्छाम । पत्न्याः पुत्र्योः च कथनस्य अनन्तरम् अपि तेन किमर्थं भवतः वासः अन्यत्र कल्पितः इति तु न ज्ञातं मया'' इति ।

तदा विदुरः मन्दहासपूर्वकम् अवदत् - ''धर्मराज ! विश्वेश्वरस्य पुत्र्यौ पत्नी च दयावत्यः करुणाशालिन्यः च । अन्येषाम् आदरे तासां विशेषरुचिः । मान्यः विश्वेश्वरः अपि एतादृशस्वभाववान् एव । तथापि सः व्यवहारज्ञानवान् अपि । यदि मम वासः तद्गृहे एव कल्पितः स्यात् तर्हि जनाः वदेयुः यत् पुत्र्योः विवाहस्य निर्वर्तनाय तेन कुतन्त्रं रचितम् इति । अतः एव तेन मम वासाय अन्यत्र व्यवस्था कल्पिता, चिकित्साव्यवस्था च कृता । एतस्य गृहस्य सम्बन्धः मह्यं रोचते । गोपीनाथः सोमशेखरः चापि विश्वेश्वरस्य पुत्र्यौ इष्टवन्तौ स्तः इति तयोः मुखदर्शनात् एव भासते । अतः विश्वेश्वरः तद्गृहसदस्याः च अनुमन्यन्ते चेत् तस्य पुत्र्यौ मम स्नुषे भवितुम् अर्हतः'' इति ।

अनन्तरदिने विश्वेश्वरस्य गृहे औपचारिक-रूपेण विवाहतिथिः निश्चिता । मासाभ्यन्तरे गोपिनाथरागिण्योः, सोमशेखरमोहिन्योः च विवाहः सवैभवं प्रवृत्तः ।

धर्मराजविदुरयोः निरीक्षा यथा आसीत् तथैव उत्तमव्यवहारं दर्शितवत्यौ उभे अपि स्नुषे । अतः धर्मराजविदुरयोः आनन्दस्य सीमा एव न आसीत् ।



*अन्यदेशीया जानपदकथा (ग्रीस्‌देशीया)*

# स्वीयैः एव कुक्कुरैः मारितः स्वामी



अक्टेयनः कश्चन समर्थः तरुणः । धावने मृगयायां च सः अद्वितीयः । धावने तस्य सामर्थ्यं तावत् आसीत् यत् धावनारम्भस्थले दृष्टिगोचरः सः धावनारम्भानन्तरम् अन्तिमे स्थले एव दृष्टिगोचरः भवति स्म, न तु मध्ये । मृगयायां तत्सदृशः कोऽपि न आसीत् समग्रे राज्ये । तेन सह सर्वदा मृगया-कुक्कुराः भवन्ति स्म । ते सङ्केतमात्रेण लक्ष्यम् आवृत्य तिष्ठन्तः तस्य प्राणान् हरन्ति स्म । तेषां पटुता यथा तथैव क्रूरता अपि अपूर्वा एव ।

यस्मिन् अरण्यप्रदेशे सः निवसति तस्य प्रदेशस्य आराध्यदेवता डयाना । कदाचित् अरण्ये विहरन्ती सा वायुवेगेन धावन्तम् अक्टेयनम् अपश्यत् । तस्य दर्शनात् सा नितरां सन्तुष्टा । अरण्ये एवं वेगेन सञ्चारः करणीयः इति तस्याः अपि तीव्रा इच्छा आसीत् । किन्तु तस्याः सखीषु कापि एतद्विषये साहचर्यं दातुं समर्था न आसीत् । अतः तस्याः मनसि एतद्विषये कश्चन खेदः आसीदेव । अक्टेयनस्य दर्शनात् तया महान् आनन्दः प्राप्तः ।

डयाना अक्टेयनसमीपं गत्वा प्रार्थितवती – ''मया सह धावतु कृपया'' इति । देवतायाः साहचर्यस्य प्रस्तावः तस्मिन् महान्तं रोमाञ्चम् अजनयत् । सः सहर्षं तस्याः प्रस्तावम् अङ्गी-कृतवान् । ततः तौ अरण्यस्य सर्वान् कोणान् गतवन्तौ धावनपुरस्सरम् । प्रतिदिनम् अपि तौ एवमेव धावनं कृतवन्तौ । अक्टेयनस्य मृगया-कुक्कुराः सर्वदापि तम् अनुसरन्ति स्म ।

आदौ अक्टेयनः डयानायाः विषये विशेषादरं प्रदर्शयति स्म । किन्तु दिनानि यथा

यथा गतानि, तस्याः नैकट्यं यथा प्रवृद्धं, तथा तथा स च आदरभावः क्षीणः जातः ।

कदाचित् सः ताम् अवदत् – ''यदि अहम् इच्छेयं तर्हि भवतीं धावनेन पराजेतुम् अपि शक्नुयाम् । किन्तु अहं तथा न करोमि । पृष्ठतः भवत्याः स्थितिम् अहं न इच्छामि'' इति । एतत् श्रुत्वा डयाना मन्दहासमात्रं प्रकटितवती । वस्तुतः वस्तुस्थितिः अन्या एव आसीत् । सा तु देवकुले उत्पन्ना इत्यतः वेगेन वायुम् अपि अतिशेतुम् अर्हति स्म । अतः मानवमात्रस्य पराजये तस्याः न कोऽपि क्लेशः । तथापि साहचर्यं दत्तवन्तम् अक्टेयनं सा खेदयितुम् अनिच्छन्ती तस्य एतादृशं वचनं श्रुत्वा अपि मौनेन स्थितवती ।

तया स्पष्टतया सूचितम् आसीत् यत् भवता अहं कदापि न स्प्रष्टव्या, मम आभरणानि अपि न स्प्रष्टव्यानि इति । अक्टेयनः तस्याः सूचनायाः विषये अवधानवान् आसीत् एव ।

अथ कदाचित् घर्मकाले डयाना अरण्यमध्यस्थे सरोवरे स्नानं कर्तुम् उद्युक्ता । तत्रत्यः परिसरः नितरां रमणीयः आसीत् । विविधानि पुष्पाणि सर्वत्र दृश्यन्ते स्म । अतः डयाना आनन्देन स्नान्ती मन्दस्वरेण गायति स्म ।

अक्टेयनस्य मनसि भावना आगता यत् हठात् उपस्थित्या डयाना आश्चर्यचकिता करणीया इति । अतः सः स्वस्य कुक्कुरैः सह अरण्यं प्रविष्टवान् । तस्याः गानस्वरम् अनुसरन् सः सरोवरसमीपम् आगतवान् । सरोवरतीरे डयानायाः आभरणानि आसन् शिलायाः उपरि । तानि गृहीत्वा स्नानमग्नां डयानां पश्यन् मूर्खवत् हसितवान् सः ।



अक्टेयनस्य उपस्थित्या डयाना नितराम् असन्तुष्टा । तेन आभरणानि स्पृष्टानि यत् तस्मात् तस्याः कोपः प्रवृद्धः । सा शापं दत्तवती यत् भवान् हरिणः भवतु इति । अनन्तरक्षणे एव सः हरिणरूपं प्राप्तवान् ।

आत्मनः पार्श्वे एव हरिणं प्राप्य मृगयाकुक्कुराः नितरां सन्तुष्टाः । ते आक्रमणेन तम् आवृतवन्तः । ततः पलायनाय तेन हरिणेन कृतः प्रयासः सर्वोऽपि विफलः जातः ।

हरिणस्य शरीरं क्षतविक्षतं कृत्वा तं क्षणाभ्यन्तरे मारितवन्तः ते कुक्कुराः । एवम् अक्टेयनः स्वस्य अविवेकस्य कारणतः स्वयं मरणं प्राप्तवान् । मानवदेवकुलीययोः सुमधुरः सम्बन्धः एतेन क्रमेण समाप्तिम् अगात् ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन



**अधस्तनकथा पठ्यताम् -**

परमहंसस्य पुत्राः गृहे कमपि पक्षिणं पोषयितुम् इष्टवन्तः । अतः कस्यचित् पक्षिणः क्रयणाय परमहंसः विपणिं गतः । बहुधा अन्वेषणस्य अनन्तरं तेन कश्चन सुन्दरः शुकः दृष्टः । आपणिकः 'शतं रूप्यकाणि एतस्य मूल्यम्' इति अवदत् ।

''अधिकं मूल्यम् एतत्'' इति अवदत् परमहंसः ।

''नाधिकं तत् । यदि मम वचने अविश्वासः तर्हि शुकः एव पृच्छ्यताम्'' इति अवदत् आपणिकः ।

परमहंसः पञ्जरसमीपं गत्वा अपृच्छत् - ''भवतः मूल्यं किं शतं रूप्यकाणि ?'' इति ।

''अथ किम् ?'' इति अवदत् शुकः ।

परमहंसः शतं रूप्यकाणि दत्त्वा तं शुकं क्रीत्वा गृहम् अगच्छत् । गृहप्राप्त्यनन्तरम् अचिरात् एव तेन अवगतं यत् अहं वञ्चितः अभवम् इति ।

- अहं वञ्चितः इत्येषः भावः परमहंसेन किमर्थं प्राप्तः ?
- किं सः शुकम् आपणिकाय प्रत्यर्पितवान् स्यात् ?
- किं बालाः अपरं शुकं प्राप्तवन्तः स्युः ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - ३१, जुलै - २००५**

नाम ------------------------ वयः --------- जन्मदिनाङ्कः -----------

विद्यालयः ------------------------------------- कक्ष्या ----------

गृहसङ्केतः ----------------------------------------------------

--------------------------------------------------------------

------------------------------- Pincode ----------------

पोषकस्य हस्ताक्षरम्          भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# मन्त्रस्य महत्त्वम्

ब्रह्मदत्तः यदा काशीं परिपालयन् आसीत् तदा बोधिसत्त्वः कस्मिंश्चित् ग्रामे चर्मकारत्वेन जन्म प्राप्तवान् आसीत् । वृत्तिव्यवहारं कुर्वन् एव सः कस्यचित् सिद्धस्य आश्रमं गत्वा ततः अपूर्वान् मन्त्रान् अधिगतवान् ।

तेषां मन्त्राणां द्वारा सः यदाकदाचिदपि आम्रवृक्षात् आम्राणि उत्पादयितुं शक्तः जातः । सः प्रतिदिनं प्रातः एकं दीर्घं दण्डं स्वीकृत्य अरण्यं गच्छति स्म । तत्र कस्यचित् आम्रवृक्षस्य समीपं गत्वा सप्तपादमिते दूरे स्थित्वा मन्त्रं जपति स्म, मन्त्रेण पूतेन जलेन प्रोक्षणं करोति स्म च । तस्मात् क्षणाभ्यन्तरे आम्रवृक्षः पुष्पितः फलितः च भवति स्म । ततः आम्राणि सङ्गृह्य गृहमागच्छति स्म सः ।

अथ कदाचित् बोधिसत्त्वः आम्रवृक्षात् फलानां प्राप्त्यर्थं मन्त्रं यदा जपन् आसीत् तदा दर्भाणाम् अन्वेषणं कुर्वन् सुनन्दः नाम ब्राह्मणयुवकः तत्र आगतः । सः अरण्यपार्श्वे स्थिते अग्रहारे निवसति स्म । सः यद्यपि अध्ययने न निपुणः, तथापि तस्य इच्छा तु आसीत् यत् कथञ्चित् पाण्डित्यं प्राप्य रजतसुवर्णादीनि मया सम्पाद्य वैभवोपेतं जीवनं यापनीयम् इति ।

यदा बोधिसत्त्वः गृहं प्रति प्रस्थातुम् उद्युक्तः तदा सुनन्दः तस्य हस्तात् आम्रफलग्रन्थिं स्वीकृत्य तम् अनुसृतवान् । ततः स्वस्य नामधामादिकम् उक्त्वा महत्या श्रद्धया तदीयेषु गृहकृत्येषु बहुधा साहाय्यम् अकरोत् च ।

कानिचन दिनानि अतीतानि । एकदा बोधिसत्त्वः पत्नीम् अवदत् – ''एषः तरुणः किमर्थम् अस्मद्गृहम् आश्रितवान् इति किं भवत्या ज्ञायते ? सर्वस्मिन् अपि काले आम्राणि स्रष्टुं समर्थः मन्त्र मत्तः प्राप्तव्यः इति एतस्य इच्छा । महालोभी एषः । अतः मया मन्त्रः बोध्यते चेदपि दीर्घकालं यावत्

सः मन्त्रः तस्य उपकारं न करिष्यति'' इति ।

सुनन्दस्य विनयादिव्यवहारेण बोधिसत्त्वस्य पत्नी नितरां सन्तुष्टा आसीत् । अतः तस्मिन् करुणावती सा उक्तवती – ''एषः तरुणः अस्माकं गृहस्य सर्वेषु कार्येषु साहाय्यम् आचरति । अस्माकं पुत्रवत् व्यवहरति सः । अतः सः किमर्थं वा मन्त्रोपदेशेन न अनुग्रहणीयः भवता ? तत्तस्य भाग्यानुगुणं फलं सिद्धं भवति । फलं मनसि निधाय कार्यं न करणीयम् । कार्यकाले कर्तव्य-बुद्धिमात्रं स्यात्'' इति ।

बोधिसत्त्वः क्षणकालं मौनेन अतिष्ठत् । ततः सः पत्न्याः आशयं पुरस्कुर्वन् सुनन्दम् उद्दिश्य मन्त्रस्य उपदेशाय मतिं कृतवान् ।

अनन्तरदिने सः सुनन्दम् आहूय – ''वत्स ! मया बोध्यमानः मन्त्रः अपूर्वः । यदि न्याय्येन क्रमेण तस्य उपयोगः क्रियेत तर्हि भवता धनं यशः च प्राप्येत । किन्तु एकं वचनम् अत्र स्मर्तव्यं यत् यदि कश्चित् भवन्तं पृच्छेत् – एतत् भवता कुतः ज्ञातम् इति, तर्हि भवता मन्त्रस्य रहस्यं न उद्घाटनीयम् । यदि उद्घाट्येत तर्हि मन्त्रस्य माहात्म्यम् अपगमिष्यति'' इति उक्त्वा तं मन्त्रम् उपदिष्टवान् ।

मन्त्रं ज्ञात्वा गृहं गतः सुनन्दः मन्त्रबलेन आम्राणि सृजन् तेषां विक्रयणेन प्रभूतस्य धनस्य सम्पादनम् आरब्धवान् ।

एतेन क्रमेण सुनन्देन सृष्टम् एकम् आम्रफलं कदाचित् काशीमहाराजेन प्राप्तम् । तत् प्राप्य राजा नितराम् आश्चर्यचकितः । सः सुनन्दं तस्य स्रष्टारं ज्ञात्वा तम् आस्थानं प्रति आनायितवान् ।



सः सुनन्दम् अपृच्छत् – ''भवान् असमये आम्राणि कथं स्रष्टुं शक्तवान् ? एतादृशं कार्यं देवाः एव कर्तुम् अर्हन्ति, न तु मानवाः । भवता कथम् एतत् ज्ञातम् ?'' इति ।

राज्ञः प्रश्नं श्रुत्वा प्रसन्नः सुनन्दः अवदत् – ''महाराज ! यत् मया विक्रीयते तत् मया स्वयम् एव सृज्यते । अहं कमपि मन्त्रविशेषं जानामि । तद्बलेन मया असमये अपि आम्राणि स्रष्टुं शक्यानि'' इति ।

एतत् उत्तरं प्राप्य राजा आश्चर्येण अवदत् – ''अपूर्वः विषयः एषः । भवतः मन्त्रस्य माहात्म्यं प्रत्यक्षं द्रष्टव्यम् इति मम इच्छा । किं भवान् मम उद्याने स्थितात् आम्रवृक्षात् अपि आम्राणि उत्पादयितुम् अर्हति ?'' इति ।

सुनन्दः ससन्तोषम् एतं प्रस्तावम् अनुमतवान् । अनन्तरदिने राजा सपरिवारं सुनन्देन

CHANDAMAMA INDIA LTD.
JULY-05
LIBRARY

सह उद्यानं गतवान् । सुनन्दः वृक्षात् सप्तपादमिते दूरे स्थितवान् । मन्दं मन्त्रम् उच्चार्य कमण्डलुस्थेन जलेन आम्रवृक्षं प्रोक्षितवान् । अनन्तरक्षणे एव आम्रवृक्षात् शतशः फलानि पतितानि । एतत् दृश्यं दृष्ट्वा राजा तत्परिवारजनाः च नितरां सन्तुष्टाः । सर्वे आम्रफलस्य रुचिम् आस्वादितवन्तः । तानि फलानि नितरां स्वादूनि आसन् । एतस्मात् सन्तुष्टः राजा सुनन्दं प्रशंसन् महता प्रमाणेन तं सत्कृतवान् ।

एतदनन्तरं राजा अपृच्छत् – ''एतादृशस्य महिमान्वितस्य मन्त्रस्य उपदेष्टा भवतः गुरुः कः ?'' इति ।

किम् उत्तरं वक्तव्यम् इति सुनन्दः क्षणकालं चिन्तितवान् । 'मन्त्रस्य रहस्यं न वक्तव्यम्' इत्येतत् गुरोः वचनं तेन स्मृतम् । तथापि सः अचिन्तयत् – 'मया मन्त्रः कथमपि कण्ठस्थीकृतः अस्ति एव । तस्य विस्मरणं तु सर्वथा असम्भवम् । मन्त्रस्य शक्तेः अपगमः अपि न सम्भाव्यते' इति । ततः सः मन्त्रप्राप्तिक्रमं राजानं निवेदितवान् ।

तदा राजा अवदत् – ''किम् एषः महिमशाली महामन्त्रः सामान्यात् कस्माच्चित् चर्मकारात् प्राप्तः ? श्रोत्रियवंशे जातः भवान् किं भोगलालसया स्वकुलधर्मं विस्मृतवान् ? किमर्थम् एतादृशं नीचं कार्यं कृतं भवता ?'' इति ।

राज्ञः मुखात् एतत् वचनं श्रुत्वा लज्जितः सुनन्दः शिरः अवनमय्य ततः निर्गतवान् ।

कानिचन दिनानि अतीतानि । राज्ञः मनसि आम्राणि खादनीयानि इति इच्छा उत्पन्ना । सः सुनन्दम् आनाय्य स्वस्य इच्छां उक्तवान् । ततः सर्वे उद्यानं प्रति गतवन्तः ।

सुनन्दः सप्तपादमिते दूरे स्थित्वा मन्त्रं स्मर्तुं प्रयासं कृतवान् । किन्तु महता प्रयत्नेन अपि सः मन्त्रं स्मर्तुं न शक्तवान् । अतः सः अवगतवान् यत् गुरोः आदेशस्य अतिक्रमणं यत् कृतं तस्यैव फलम् एतत् इति ।

राजा आश्चर्येण वृक्षमेव पश्यन् अतिष्ठत् । किन्तु वृक्षात् फलानि न पतितानि । सुनन्दः शिरः अवनमय्य – ''महाराज ! मया गुरोः आदेशस्य पालनं यत् न कृतं तस्य फलम् एतत् । अतः मम मन्त्रशक्तिः सर्वथा विलुप्ता अस्ति'' इति उक्त्वा शिरः अवनमय्य ततः वेगेन निर्गतवान् ।





# विष्णुपुराणम्

श्रीकृष्णः अर्जुनस्य रथं युद्धभूमिं नीत्वा द्वयोः सेनयोः मध्ये स्थापितवान् । अर्जुनः सकृत् शत्रुसेनाम् अवलोकितवान् । युद्धार्थं पितामहाः, गुरुजनाः, पूज्याः आचार्याः, बान्धवाः, मित्राणि च सज्जीभूय उपस्थिताः सन्ति । एतान् सर्वान् दृष्टवतः अर्जुनस्य मनः शिथिलम् अभवत् । सः चिन्तितवान् - 'राज्यार्थं किम् अहं प्रियजनानां वधं कुर्याम् ? बान्धवानां रक्तैः लिप्तं राज्यं स्वीकृतं चेत् निश्चयेन नरकप्राप्तिः भविष्यति । एतादृशं राज्यं मह्यं मास्तु । अहं राज्यार्थं कदापि युद्धं न करिष्यामि' इति ।

एवं चिन्तयन् सः रथे उपविष्टवान् । तस्य हस्ततः धनुर्बाणादीनि पतितानि । तस्य मनः किङ्कर्तव्यतामूढतां गतम् ।

अकाले आपतिताम् अर्जुनस्य दुरवस्थां दृष्ट्वा श्रीकृष्णः हसन् उक्तवान् - ''हे अर्जुन ! युद्धक्षेत्रे अविवेकेन शस्त्रत्यागः, क्षत्रियकुलोत्पन्नस्य भवतः न उचितः । देशकालानुसारं स्वकर्तव्यपालनम् एव युक्तः धर्मः । वस्तुतः परमेश्वरः एव अद्वितीयः जगतः कर्ता । मनुष्याः निमित्तमात्रभूताः । अधर्मान्यायादीनां दूरीकरणपूर्वकं धर्मन्याययोः स्थापने मनुष्यः भगवतः साधनमात्रम् । लोके यदा दुष्टाः प्रबलाः भवन्ति, यदा च सत्यस्य धर्मस्य च हानिः सम्भवति, तदा दुष्टानां नाशनार्थं धर्मसंस्थापनार्थं च नारायणः प्रत्येकस्मिन् अपि युगे युगानुगुणम् अवतारं करोति । भगवतः अवताररूपेण स्थितं मां स्मरतु । मां शरणं गच्छतु । मम आदेशम् अनुसरतु । भवान् श्रद्धया स्वस्य कर्तव्यम् आचरतु । फलविषये मा चिन्तयतु । उत्तमेन



क्षत्रियेण यत् करणीयं तदेव करोतु भवान् । गाण्डीवं धनुः गृहीत्वा पुनरपि युद्धार्थं सज्जः भवतु'' इति ।

एतादृशम् उपदेशं श्रुत्वा अपि 'कृष्णः एव नारायणस्य अवतारभूतः' इत्येतस्मिन् विषये अर्जुनस्य सन्देहः एव आसीत् । कृष्णः अर्जुनस्य सन्देहं समूलं निवारयितुम् इच्छन् स्वकीयं विश्वरूपं धृतवान् ।

भगवतः विश्वरूपे अन्तर्गतं सृष्टिस्थिति-लयादिकं सर्वं युगपत् एव दृष्टवान् अर्जुनः । जगतः सृष्टौ, पालने, संहारे च स्थिता अखण्डा एव प्रभुलीला तेन दृष्टा । सर्वाः अपि देवताः विश्वरूपे समाविष्टाः आसन् ।

एतस्य विश्वरूपस्य दर्शनात् अर्जुनस्य प्रक्षुब्धं मनः शान्तम् अभवत् । तस्य सन्देहाः निवृत्ताः । चिन्ताः परिहृताः । मनसि एकः एव भावः प्रतिध्वनति स्म – 'श्रीकृष्णः सर्वेषाम् इव मम अपि प्रेरकः । अहं तदधीनः कश्चित् सामान्यः' इति ।

इदानीम् अर्जुनस्य प्रत्येकस्मिन् अपि कणे स्फूर्तिः उद्भूता । सः उत्साहेन उत्थितवान् । गाण्डीवं सज्जीकृत्य बाणान् हस्तेन गृहीत्वा, शङ्खोद्घोषं कृतवान् ।

कौरवाणां पाण्डवानां च सेनयोः घोरं युद्धम् आरब्धम् । अष्टादशदिनपर्यतं तत् युद्धं प्रवृत्तम् । अन्ते पाण्डवैः एव जयः प्राप्तः ।

पूर्वं शान्तिदूतरूपेण गतः श्रीकृष्णः यत् उक्तवान् आसीत् तत् सर्वं सत्यम् एव संवृत्तम् । भीमः स्वप्रतिज्ञां पूरितवान् । द्रौपदी पुनरपि विकीर्णानां केशानां बन्धनं कृतवती ।

अभिमन्युरूपेण स्थितः कालनेमिः वीर-स्वर्गं प्राप्तवान् । कर्णरूपेण स्थितः सहस्र-कवचस्य अंशः पुनरपि शिवस्य अन्तः प्रविष्टः । अर्जुनकृष्णरूपेण स्थितयोः नर-नारायणयोः अवतारः अपि समाप्तप्रायः आसीत् । कृष्णः भूदेव्याः कृते यत् वचनं दत्तवान् आसीत् तदनुसारं भूदेव्याः उपरि स्थितः पापभारः निवारितः अभवत् ।

पुत्रस्य दुर्योधनस्य मरणेन धृतराष्ट्रस्य मनः प्रक्षुब्धम् आसीत् । 'पुत्रमरणस्य प्रतीकारः करणीयः' इति चिन्तयन् सः भीमं द्रष्टुम् ऐच्छत् । कृष्णः धृतराष्ट्रस्य हृदयभावं जानाति स्म । अतः सः भीमस्य लोहप्रतिमां निर्माप्य धृतराष्ट्रस्य पुरतः स्थापितवान् । धृतराष्ट्रस्य आलिङ्गनेन सा प्रतिमा चूर्णीभूता ।

पुत्रशोकेन सन्तप्ता गान्धारी कृष्णम् उद्दिश्य शापं दत्तवती – ''कौरवाणां वंशस्य इव

यादवानां वंशस्य अपि सर्वनाशः अचिरात् एव भवतु'' इति ।

श्रीकृष्णः मन्दहासं प्रकटयन् उक्तवान् - ''गान्धारि ! भवती पतिव्रता । भवत्याः वचनं कदापि व्यर्थं न भविष्यति । विधिनिर्णयः एव भवत्याः मुखेन प्रकटितः अस्ति'' इति ।



पाण्डवानां वंशं निर्मूलयितुम् इच्छन् अश्वत्थामा उत्तरायाः गर्भे स्थितस्य शिशोः उपरि अपि अस्त्रप्रयोगं कृतवान् आसीत् । अतः उत्तरायाः गर्भतः शिशुः मृतः एव बहिः आगतः । श्रीकृष्णः तस्य शिशोः उपरि पादं स्थापयित्वा प्राणान् परीक्षितवान्, जीवदानं कृतवान् च । अतः तस्यः शिशोः नाम 'परीक्षित्' इत्येव जातम् । एषः एव पाण्डव-वंशोद्धारकः सञ्जातः ।

निद्रावस्थायां स्थितान् द्रौपद्याः पञ्च पुत्रान् अपि द्रोणाचार्यस्य पुत्रः अश्वत्थामा मारितवान् । अतः कुपितः अर्जुनः कृष्णः च द्रौपद्याः वचनानुसारं अश्वत्थामानं बद्ध्वा आनीय द्रौपद्याः पुरतः स्थापितवन्तौ ।

''नरकवाससदृशं जीवनम् एव भवतः कृते उचितः दण्डः । मृत्युना मोक्षः सिध्यति । अत भवान् चिरञ्जीवी भूत्वा पीडाम् अनुभवतु'' इति शापं दत्त्वा द्रौपदी तं प्रेषितवती ।

श्रीकृष्णस्य वचनानुसारम् अर्जुनः अश्वत्थाम्नः शिरसि विद्यमानं मणिं निष्कासितवान् । एतेन अश्वत्थामा मानसिकरोगी सञ्जातः । सः भ्रान्तमतिः इव इतस्ततः अटनम् आरब्धवान् ।

शरशय्यायां शयितः इच्छामरणः भीष्मः उत्तरायणप्राप्तेः अनन्तरं देहत्यागं कृतवान् । भीष्मस्य प्राणाः भगवति लीनाः जाताः ।

युधिष्ठिरस्य राज्याभिषेकः जातः । अश्वमेधयागस्य सन्नाहः अपि विशेषतया प्रवृत्तः । श्रीकृष्णः यादवप्रमुखाः च यदा महाभारत-युद्धार्थं निर्गताः आसन्, तदा द्वारकायां समर्थः नायकः कोऽपि न आसीत् । अतः यादवाः गर्वशालिनः स्वेच्छाचारिणः च सञ्जाताः । युद्धस्य आरम्भतः पूर्वम् एव बलरामः तीर्थ-यात्रार्थं निर्गतः आसीत् ।

कदाचित् महर्षिः विश्वामित्रः द्वारकाम् आगतवान् । उद्दण्डस्वभावाः यादवाः साम्बेन गर्भिणीवेषं धारितवन्तः । तं विश्वामित्रसमीपं नीत्वा परिहासेन पृष्टवन्तः - ''मुनिवर ! एतस्याः गर्भतः पुत्रः जायेत, उत पुत्री ? कृपया कथयतु'' इति ।

तेषाम् असभ्यचेष्टया कुपितः विश्वामित्रः



शापं दत्तवान् – 'रे मूर्खाः दुष्टयादवाः ! एतस्य गर्भतः मुसलः उत्पत्स्यते । तस्य कारणतः समग्रः यदुवंशः समूलं नष्टः भविष्यति'' इति । अनन्तरम् अपि यादवाः विश्वामित्रम् उपहासेन बहु पीडितवन्तः । यदा साम्बः स्त्रीवेषं निष्कासितवान् तदा वस्तुतः एकः मुसलः उत्पन्नः आसीत् । एतत् दृष्ट्वा यादवाः सर्वे भीताः ।

युद्धं समाप्य श्रीकृष्णः द्वारकां प्रत्यागतवान् । तदा यादवाः कृष्णं सर्वं वृत्तान्तं निवेदितवन्तः । तदा कृष्णः उक्तवान् – ''मुसलं खण्डशः कृत्वा समुद्रे क्षिपन्तु'' इति ।

एवं क्षिप्तम् एकं खण्डं कश्चन मीनः गीर्णवान् । तं मीनं व्याधः गृहीतवान्, मीनस्य उदरे स्थितं तं मुसलभागं स्वबाणाग्रे नियोजितवान् च । कालान्तरे तेन एव बाणेन कृष्णस्य देहान्त्यं सञ्जातम् । मुसलस्य अन्ये कणाः तीरं प्राप्तवन्तः । तेभ्यः एव कुशनामकानि तृणानि तत्र उत्पन्नानि ।

कानिचन वर्षाणि अतीतानि । एकदा यादवाः सर्वे विनोदविहारम् इच्छन्तः समुद्रतीरम् आगतवन्तः । तत्र ते यथेष्टं मदिरां पीतवन्तः । मत्ताः ते विवेकशून्याः सञ्जाताः । ते आत्मश्लाघनं कर्तुम् आरब्धवन्तः । एतन्निमित्तः परस्परविवादः ताडनपर्यन्तं प्रवृद्धः । विवेकरहिताः ते कुशतृणैः एव युद्धं कृतवन्तः । तेनैव सर्वे अपि मरणं प्राप्तवन्तः ।

एवंप्रकारेण मुनिशापः सत्यः सञ्जातः । मुसलः एव समग्रस्य यदुवंशस्य नाशम् अकरोत् । यदुवंशनाशस्य वार्तां श्रुत्वाः बलरामः अतीव खिन्नः । संसारात् एव विरक्तः सः अरण्यं गत्वा समाधिस्थः जातः । योगबलेन शरीरं त्यक्त्वा सः पुनः अपि आदिशेषरूपेण वैकुण्ठं प्राप्तवान् ।

द्वारकानिर्माणार्थं समुद्रराजेन या भूमिः दत्ता आसीत् सा सप्तभ्यः दिनेभ्यः पूर्वं कृष्णेन प्रत्यर्पणीया आपतिता । अतः श्रीकृष्णः अर्जुनाय वार्तां प्रेषितवान् – ''भवान् शीघ्रम् एव आगत्य द्वारकानगरे स्थितान् बालान्, वृद्धान्, स्त्रियः च इन्द्रप्रस्थं नयतु'' इति ।

अनन्तरं श्रीकृष्णः उद्धवं तत्त्वम् उपदिष्टवान्, तस्मै स्वकीयं वास्तविकं रूपं प्रदर्शितवान् च । यदुकुलं यदा समाप्तं तदा एव कृष्णावतारेण उद्दिष्टं सर्वं समाप्तम् आसीत् ।

अन्ते श्रीकृष्णः समुद्रतटस्य समीपे उपविश्य दिव्यं वेणुवादनं कृतवान् । नादमाधुर्येण प्रकृतिः पुलकिता । समुद्रः शान्तः । अनन्तरं

श्रीकृष्णः एकस्य वृक्षस्य अधः, शिलायाः उपरि विश्रान्तिमुद्रायां स्थितवान् । दूरतः पश्यन् कश्चित् व्याधः कृष्णं हरिणं मन्यमानः बाणप्रयोगं कृतवान् ।

बाणः कृष्णस्य पादाङ्गुष्ठे लग्नः । बाणस्य अग्रभागे मत्स्यस्य उदरात् प्राप्तः मुसलखण्डः योजितः आसीत् । यस्य मुसलस्य कारणेन यदुवंशस्य नाशः जातः, तेन एव मुसलेन कृष्णस्य अपि अन्त्यं जातम् ।

पूर्वं कदाचित् दूर्वासाः भ्रमन् द्वारकाम् आगतवान् आसीत् । 'पायसेन मम शरीरं लिम्पतु' इति सः कृष्णम् आज्ञापितवान् । श्रीकृष्णः तस्य शरीरं पायसेन लिप्तवान् । तदा प्रमादवशात् पादाङ्गुष्ठः एकः न लिप्तः आसीत् । तदा दुर्वासाः उक्तवान् – 'अङ्गुष्ठः एव भवतः मरणकारणं भविष्यति' इति ।

बाणस्पर्शेन अङ्गुष्ठतः रक्तस्य स्रावः आरब्धः । व्याधः समीपम् आगत्य दृष्टवान् । वेदनया पीडाम् अनुभवन् श्रीकृष्णः तेन दृष्टः । एतत् दृष्ट्वा पश्चात्तापं प्रकटयन् व्याधः रोदनम् आरब्धवान् ।

तदा श्रीकृष्णः व्याधम् उक्तवान् – ''भोः, भवान् मम विषये दुःखं न अनुभवतु । रामावतारसमये अहं वृक्षेषु निलीय वालिनं मारितवान् । तदा भवान् अङ्गदः आसीत् । अस्मिन् जन्मनि मया पूर्वकृतस्य फलं प्राप्तम् । कर्मफलं सर्वैः अनुभोक्तव्यम् एव । अतः भवान् चिन्तां न करोतु'' इति ।

एवम् उक्त्वा श्रीकृष्णः व्याधाय स्वकीयं रामावतारं प्रदर्शितवान् । रामदर्शनेन व्याधः पूर्वजन्मस्मरणं प्राप्तवान् । भक्त्या परवशः सः तस्याम् एव स्थितौ शरीरत्यागं कृतवान् ।



श्रीकृष्णस्य सारथिः स्वस्य स्वामिनम् अन्विष्यन् तत्र आगतवान् । कृष्णस्य विकट-परिस्थितिं दृष्ट्वा सः विलपनम् अकरोत् । तदा कृष्णः तं सान्त्वयित्वा उक्तवान् - ''भवान् शीघ्रं द्वारकां गत्वा सर्वान् यादवान् 'नगरं त्यक्तव्यम्' इति वदतु । 'यादवस्त्रियः सर्वाः नेतव्याः' इति अर्जुनं स्मारयतु । उद्धवम् अक्रूरं च मम आशीर्वादान् निवेदयतु'' इति ।

सारथिः अश्रूणि विमुञ्चन् हृदयेन दुःखं वहन् ततः निर्गतः । श्रीकृष्णः पुनः एकवारं वेणुनादं कृतवान् । गानमाधुर्यं तत्र सर्वत्र प्रसृतम् । श्रीकृष्णः स्वकीयां दैहिकलीलां समापितवान् । विष्णुरूपेण वैकुण्ठे शेष-शय्याम् अधिरूढवान् च ।

श्रीकृष्णस्य मरणसमनन्तरम् एव सागरः उपरि आगतः । समग्रः द्वारकाप्रदेशः जले विलीनः अभवत् । एतदनन्तरं कलियुगम् आरब्धम् । कृष्णस्य मरणानन्तरम् उद्धवः सर्वत्र गत्वा कृष्णतत्त्वानां प्रसारं कृतवान् ।

विष्णोः अवतारभूतः श्रीकृष्णः स्वस्य लीलया सर्वान् बोधयितुम् एव अवतारं प्राप्तवान् आसीत् । तेन सर्वेषु मानवेषु ईश्वर-भक्तेः उद्बोधनं कृतम् । दुष्टशिक्षणं, शिष्टपरि-पालनम् इत्येतत् उभयम् अपि तस्य अवतारस्य उद्देशः आसीत् । तच्च साधितं कृष्णेन । तथैव लोके एकः नवीनः आदर्शः अपि तेन उप-स्थापितः । सः उन्नतान् विचारान् स्वीयेन आचरणेन प्रदर्श्य, सर्वेषां मार्गदर्शकः जातः ।

तस्य निर्गमनस्य अनन्तरम् अत्र कलि-युगस्य प्रवेशः जातः । कलियुगे पापस्य प्रभावः अत्यधिकः । तपःशक्तिः सर्वथा क्षीणा । अतः एव मनुष्याणां मुक्तये साधन-रूपेण भक्तिबीजानि लोके आरोपितानि ।

कृष्णेन अनुगृहीतः एकः अमूल्यः ग्रन्थः 'भगवद्गीता' । आकारेण अल्पः अपि एषः ग्रन्थः अपारं तत्त्वं सरलतया प्रतिपादयति । कृष्णार्जुनयोः संवादरूपेण लिखितः एषः ग्रन्थः समग्रेण प्रपञ्चेन पूज्यते । एषः दैनन्दिन-जीवनस्य अपि मार्गदर्शकः । अतः इदानीम् अपि बालाः, वृद्धाः, गृहस्थाः, संन्यासिनः, मुमुक्षवः च प्रेरणां प्राप्नुवन्ति ततः । अत्र वेदवेदान्तरहस्यं निहितम् अस्ति ।

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सस्सुधीर्भोक्ता दुग्धं गीतामृतं महत् ।।



# नदीस्थः द्वीपः - भवानीद्वीपः

भूगोलकक्ष्यायां वयम् अधीतवन्तः स्याम एव यत् यः भूभागः चतसृषु अपि दिक्षु जलेन आवृतः भवति सः एव 'द्वीप'शब्देन उच्यते इति । अन्दमान, निकोबार, लक्षद्वीपः, मिनिक्काय इत्यादयः तादृशेषु द्वीपेषु अन्यतमाः । एते सर्वे द्वीपाः समुद्रेण आवृताः सन्ति । तादृशाः अपि केचन द्वीपाः सन्ति, ये च नदीजलेन आवृताः भवन्ति । तादृशः नदीमध्यस्थः कश्चन द्वीपः आन्ध्रप्रदेशे अस्ति कृष्णानद्याम् । विजयवाडातः ४ कि.मी.दूरे. 'प्रकाश'बन्धसमीपे अस्ति एषः द्वीपः । एतस्य कारणतः कृष्णानद्यां जलस्तरः अधिकः जातः अस्ति । एतस्य नाम अस्ति 'भवानीद्वीपः' इति ।

बरहम्-उद्यानतः भवानीद्वीपं प्रति प्रतिदिनं जनाः गमनागमनं कुर्वन्ति । यदा नौका कृष्णानद्याः शान्तं प्रवाहभागम् अतिक्रम्य अग्रे गच्छति तदा द्वीपस्य दर्शनं प्राप्यते दूरतः । 'तरन् वैकुण्ठः' इति निर्देष्टुम् अर्हस्य एतस्य द्वीपस्य सौन्दर्यं नितराम् अस्ति प्रशंसार्हम् । बालकानां कृते तु अयं नदीप्रवासः नितराम् आनन्ददायकः । यदा द्वीपे पदं निधीयते तदा तु भाति यत् मया निसर्गस्य अङ्के एव स्थितम् अस्ति इति । अत्र भूगोलस्य विविधमुखानाम् अध्ययनं कर्तुं शक्यते ।

कृष्णा-गोदावर्योः मध्ये लघवः बहवः द्वीपाः सन्ति । तेषु भवानीद्वीपः एव विशालतमः । एतस्मिन् चलत्तरङ्गसरोवरसदृशानि शाद्वलानि, विविधैः वृक्षैः उपेतानि काननानि न सन्ति । एतस्य सर्वस्य कारणतः एषः द्वीपः दिवसात्मकस्य प्रवासस्य निमित्तम् अतिप्रशस्तम् अस्ति । पर्यावरणपर्यटनं शक्यतां गमयन् एषः द्वीपः प्रायः अद्वितीयः इत्यत्र न अतिशयोक्तिः ।

वाणिज्यव्यवहारैः पूर्णं विजयवाडानगरम् आन्ध्रप्रदेशस्य राजधानीतः हैदराबादतः २७५ कि.मी.दूरे अस्ति । उभयोः मध्ये उत्तमः स्थलमार्गः अस्ति ।







# व्यवहारचातुर्यम्

कस्मिंश्चिन् ग्रामे भद्रसेनो नाम दैवज्ञः आसीत् । परितः स्थितेषु ग्रामेषु वसन्तः सर्वे स्वहस्तान् अस्मै प्रदर्शयन्ति स्म । हस्तदर्शनमात्रेण एव सः दैवज्ञः पुरतः स्थितस्य जनस्य मनोगतं विषयमपि वदति स्म, तस्याः व्यक्तेः भूतं भविष्यं चापि निर्दुष्टं कथयति स्म । भद्रसेनस्य एषा कीर्तिः सर्वत्र प्रसृता । अतः अन्यः कोऽपि दैवज्ञः एतं ग्रामम् आगन्तुं धैर्यं न करोति स्म । यदि अज्ञात्वा कोऽपि दैवज्ञः तं ग्रामम् आगच्छेत् तर्हि भद्रसेनः तं परीक्ष्य ग्रामीणानां पुरतः तम् अपमानितं कृत्वा प्रेषयति स्म ।

कदाचित् रामशास्त्रिनामकः कश्चित् दैवज्ञः तं ग्रामं प्रति आगतः । सः भद्रसेनविषयं सर्वथा न जानाति ।

भद्रसेनः रामशास्त्रिणः आगमनं ज्ञात्वा तम् उद्दिश्य – ''भोः, हस्तसामुद्रिकशास्त्रे के के ग्रन्थाः भवता अधीताः ? भवतः ग्रामः च कः ?'' इत्यादीन् अनेकान् प्रश्नान् पृष्टवान् ।

''महोदय ! अहं हस्तसामुद्रिकविषये अल्पज्ञः । तेनैव अहं मम उदरं कथञ्चित् पूरयन् अस्मि । यत्र मम उदरं पूर्णं भवेत् स एव मम ग्रामः'' इति रामशास्त्री सविनयं भद्रसेनम् उक्तवान् ।

रामशास्त्रिणः विनयं दृष्ट्वा भद्रसेनः कुपितः सन् उक्तवान् – ''अल्पज्ञानिने भवते धनं तु मूर्खाः एव दद्युः । एतद्ग्रामीणाः न मूर्खाः । भवान् मम विषयं न ज्ञातवान् स्यात् । हस्तसामुद्रिकशास्त्रे मया सह स्पर्धितुं कोऽपि न शक्नोति । मम आज्ञां विना अस्मिन् ग्रामे पातुं जलमपि न प्राप्यते केनचिदपि । एतत् मम क्षेत्रम् । अत्र अन्यस्य कस्यचिद् दैवज्ञस्य प्रवेशः सर्वथा न अनुमतः । अतः जीवितुं यदि इच्छा तर्हि अन्यः ग्रामः गम्यताम् अद्य एव'' इति ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

एतानि वचनानि रामशास्त्रिणि क्रोधम् अजनयन् । सः निश्चितवान् – 'भद्रसेनस्य गर्वभङ्गं कृत्वा एव इतः प्रस्थातव्यम्' इति ।

अतः सः शान्तेन एव स्वरेण उक्तवान् – ''भवत्तः अपि श्रेष्ठः विद्वान् अस्मि इति गर्वः सर्वथा नास्ति मम । भवान् प्रमाणं विना माम् अपमानितवान् अस्ति । विद्यायाः श्रेष्ठता परीक्षया एव निर्णेतुं शक्या'' इति ।

तावति काले तत्र सम्मिलिताः जनाः सर्वे उक्तवन्तः – ''रामशास्त्रिणः वचनं युक्तम् अस्ति । भवन्तौ उभावपि अपरिचितस्य कस्यचित् हस्तं दृष्ट्वा भविष्यं वदताम् । तदा कः शास्त्रज्ञः इति ज्ञायते । यस्य कथनं सत्यं भवति सः एव विजयी'' इति ।

तस्मिन्नेव समये कश्चन धनिकः पार्श्वग्रामस्थः तत्र आगतः । तदा तत्र सम्मिलिताः जनाः तं धनिकम् आहूय उक्तवन्तः – ''महोदय ! अत्र काचन परीक्षा प्रचलन्ती अस्ति । कृपया भवान् स्वहस्तं एतयोः प्रदर्शयतु'' इति ।

धनिकः तयोः समीपम् आगत्य स्वहस्तं प्रदर्शितवान् । भद्रसेनः आदौ धनिकस्य हस्ते स्थिताः रेखाः दृष्ट्वा उक्तवान् – ''महोदय ! अत्र परीक्षा प्रचलति इत्यतः मया सत्यमेव वक्तव्यम् । भवतः गृहे लक्ष्मीः ससन्तोषं निवसति । किन्तु भवान् महान् कृपणः । पत्नीवचनपारिपालकः भवान् स्वातन्त्र्येण कार्यं न करोति'' इति ।

धनिकः तस्य वचनेन कुपितः सन् – ''किमपि किमपि असम्बद्धम् उक्तवान् भवान् । अपमानयितुम् किम् अहम् अत्र आहूतः ?'' इति क्रोधेन उक्तवान् ।



तदा रामशास्त्री तं धनिकम् उद्दिश्य – "महोदय ! क्रोधः मास्तु, केचन आत्मानं ज्योतिषे पण्डितं भावयन्तः एवं वदन्ति ! भवतः हस्तं प्रदर्शयतु तावत्" इति वदन् तेन प्रदर्शितं हस्तं पश्यन् – "एषः हस्तः लक्ष्म्याः निवासः । हस्ते स्थिताः रेखाः उदारतां प्रदर्शयन्ति । उन्नतस्थाने स्थिताः जनाः अपि भवतः पुरतः सविनयं तिष्ठन्ति । पूर्वजन्मनः पुण्यस्य फलरूपेण एव अनुकूला पत्नी अपि लब्धा अस्ति भवता" इति उक्तवान् ।

अनेन वचनेन सन्तुष्टः सन् सः धनिकः तं प्रशंसन् उक्तवान् – "अहो, भवतः सर्वाणि वचनानि युक्तानि एव ! मां बहोः कालतः जानन् इव यथायथं सर्वम् उक्तवान् भवान्" इति ।

ततः रामशास्त्री धनिकं सूक्ष्मं परिशील्य उक्तवान् – "भवतः मनसि विचारः आगतः अस्ति यत् एतस्मै अङ्गुलीयकं दद्यां किम् इति" इति ।

अनेन वचनेन धनिकस्य मुखं विवर्णं जातम् । तदा रामशास्त्री पृष्टवान् – "अहम् असत्यम् उक्तवान् किम् ? भवान् किमर्थम् एवं मां पश्यति ?" इति ।

तदा सः धनिकः उक्तवान् – "आर्य ! मम आश्चर्यस्य विषयः एषः यत् मम मनसि आगतः विचारः कथं भवता ज्ञातः इति" इति ।

एवं वदन् सः धनिकः अङ्गुल्यां स्थितं बहुमूल्यकम् अङ्गुलीयकं निष्कास्य रामशास्त्रिणः हस्ते दत्त्वा ततः निर्गतः ।

तत्र सम्मिलिताः जनाः सर्वे एतत् सर्वं पश्यन्तः रामशास्त्रिणः प्रशंसां कृत्वा तमेव विजयिनं भावितवन्तः ।

तेषां वचनैः भद्रसेनः लज्जया शिरः अवनमय्य स्थितवान् ।

तदा रामशास्त्री तान् जनान् पश्यन् उक्तवान् – "वस्तुतः भद्रसेनः एव हस्तसामुद्रिकशास्त्रे पण्डितः । किन्तु मादृशानां पुरतः स्वपाण्डित्यं प्रदर्शयितुं केवलं शास्त्रज्ञानं न पर्याप्तम् । अपि तु पण्डित्येन सह व्यवहारकौशलम् अपि अपेक्षितम् । समयानुगुणं पाण्डित्यं न योज्यते चेत् अहङ्कारः वर्धते । अहङ्कारः एव अपमानस्य कारणं भवति । भद्रसेनस्य विषये एतत् एव प्रवृत्तम्" इति ।



शान्तिपुरस्य सिंहासनं स्वायत्तीकृतवता वीरसिंहेन कनकदुर्गायाः वशीकरणाय कृताः प्रयत्नाः विफलाः भवन्ति । नूतने मन्दिरे तस्याः मूर्तेः प्रतिष्ठापनं स्थगयितुम् इच्छति सः । दलपतेः पुत्री सुकन्या प्रतिमायाः रक्षणाय वीरसिंहस्य परिणयम् अङ्गीकरोति । जब्बरसिंहेन अनुगम्यमाना सा गजम् आरुह्य प्रतिष्ठते । कश्चन वानरः जब्बरसिंहं पातयति । सुकन्या विमुक्ता भवति ।

# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्




चित्रम् - गान्धि-अय्यः

सुखदेवः द्वारमण्डपसमीपं गच्छति । तत्र सुकन्या गोविन्दः च तेन दृश्येते ।







गोविन्दस्य निर्गमनपर्यन्तं सुकन्या तत्रैव तिष्ठति







यावत् सा स्वस्य निवासं प्रति गमनाय उद्युक्ता तावता .....




सुकन्या राजकुमारस्य आर्यस्य उपस्थित्या लज्जते ।
सुकन्ये, मान्यः अतिथिः उपस्थितः अस्ति तस्य सत्काराय आनीयन्ताम् फलानि ।
यथाज्ञापयति भवान्


एषा निरापदम् आगता इत्यतः अहं सन्तुष्टः अस्मि । किन्तु एतदत्र स्मर्तव्यं यत् वीरसिंहः व्रणितः व्याघ्रः इव जातः अस्ति ...
एतत्सर्वं कथं प्रवृत्तम् इति सुकन्या मां वदन्ती आसीत् ।


आर्यः दलपतिः च अरण्ये प्रवृत्तायाः घटनायाः परिणामानां विषये चर्चां कुरुतः ।
भवद्भिः जागरूकैः भवितव्यम् ।
वीरसिंहस्य अग्रिमाणि पदानि कानि स्युः इति चिन्ता मम ।


सः भवन्तं भवत्पुत्रीं च अवश्यं पीडयेत् एव पुनरपि इति भाति मम ।
ममापि एतदेव भयम् । आर्य ! सः पुनरपि आक्रमणप्रयासं कर्तुमपि अर्हति ।


सुकन्यायाः प्रवेशस्य कारणतः तयोः सम्भाषणं स्थगितं भवति ।
भवता विशेषतः अवधानवता भवितव्यम् इति भाति मम ।
मया एतस्य स्थानस्य सुरक्षा चिन्तनीया । मम सुरक्षाधिकारी ...
भवती स्वयं गत्वा तस्मै ददातु सुकन्ये !
तात ! मया राजकुमाराय पेयं फलानि च आनीतानि सन्ति ।

ततः आर्यः तस्मात् स्थलात् निर्गतः ।

आर्य ! स्वविषये अपि अवधानं भवतु ।

गुरुवर्येण सह समालोचनस्य अनन्तरं मया स्वस्य योजना करिष्यते ।

शान्तिपुरे वीरसिंहः क्रोधेन नितरां सन्तप्तः भवति ।

कश्चन वानरः पराजितम् अकरोत् इत्येतत् नितरां लज्जास्पदम् ।

किन्तु महाभाग ! सः पृष्ठभागतः आगत्य आक्रमणम् अकरोत् । अतः मया राजकुमारी परित्यक्तव्या अभवत् ।

अहं भवतः एतानि व्याजवचनानि श्रोतुं न सिद्धः ।

अकस्मात् कश्चन शुकः अन्तः आगत्य एकं वस्त्रखण्डं पातयति ।

पुनः कश्चन सन्देशः !

एषः अपसार्यताम् ।

कश्चन अङ्गरक्षकः वस्त्रखण्डम् उन्नीय जब्बरसिंहाय ददाति ।

एतस्मिन् किं लिखितम् अस्ति ? पठ्यताम् ।

वीरसिंह ! सुकन्यायाः प्राप्त्यर्थं प्रयासः त्यज्यताम् इति आज्ञापयति राजकुमारः आर्यः ।

आत्मानं राजकुमारं स्वयं घोषयन् सः कः स्यात् ?

राजकुमारः आर्यः ! कः एषः ?

कस्य देशस्य राजकुमारः सः ?

यान् वयं शान्तिपुरात् बहिष्कृतवन्तः तेषां विद्रोहिणां नायकः स्यात् । सः आत्मानं राजकुमारं कथयन् स्यात् ।

माम् अपि आज्ञापयतः तस्य कियत् धार्ष्ट्यम् ?


ते सर्वे अमृतपुरे सन्ति । इदानीम् अस्माभिः प्रतिवेशि राज्यं वशीकरणीयम् ।
उत्तमः विचारः एषः । वयं तत् वशीकरवाम । तत्रत्यम् ऐश्वर्य स्वायत्तीकरवाम ।


राजविरोधिनां नेता वसन्तः जयानन्देन मिलति ।
एषोऽहं प्रणमामि गुरुवर्य ! आर्यः क्व ?
आयुष्मान् भव ! आर्यः एतावता उपस्थितः भवेत् ।


कनकदुर्गामन्दिरे स्थितायाः स्वर्णप्रतिमायाः रक्षणव्यवस्थां निर्वहति आर्यः ।


वसन्तः आर्यम् अभिवन्दते ।
वसन्त ! बहोः कालात् अनन्तरं दर्शनं भवतः ।
गुरुवर्यः कनकदुर्गामन्दिरस्य विषयं वदन् आसीत् ।
इदानीं भवान् आर्यस्य साहाय्यं कर्तुम् अर्हति ।


गुरुवर्य ! वयम् आर्यस्य नेतृत्वम् इच्छामः ।


वसन्त ! आर्येण मातुः कनकदुर्गायाः आशीर्वादः प्राप्तः अस्ति ।
वयं तस्य आदेशस्य पालने समुत्सुकाः ।


जयानन्दः कानिचन दिनानि मौनव्रतम् आचरति ।
वीरसिंहः तूष्णीं न तिष्ठति इति भाति । सः अमृतपुरस्य वशीकरणाय योजनां कुर्वन् स्यात् इति भाति मम ।


लोकसेना अमृतपुरस्य रक्षणं करिष्यति ।
योग्ये काले आर्यः भवत्समीपम् आगत्य सेनायाः नेतृत्वं वक्ष्यति ।
वीरसिंहस्य पतनम् अचिरात् एव भविष्यति ।
अनुवर्तते

## अस्मद्देशस्य अपूर्वाणि भवनानि

# कुतुबमिनार्



कुतुबमिनारभवनं देहल्याः दक्षिणभागे ९-१० मैल्दूरे अस्ति । १२०० तमे वर्षे कुतुबुद्दीनः ऐकः (गुलामवंशीयः) एतस्य भवनस्य निर्माणम् आरब्धवान् । एतस्य औन्नत्यं २३९ पादमितम् अस्ति । पञ्च अट्टाः सन्ति एतस्मिन् । ३७८ सोपानानि सन्ति अत्र ।

एतत् भवनं रक्तवर्णीयया सङ्गमरमर-शिलया निर्मितम् अस्ति । प्रथमाट्टस्य भित्तौ २० अलङ्कारपङ्क्तयः सन्ति । तासु प्रथमा गोलाकारा, द्वितीया कोणाकारा । एवमेव अन्याः अपि पङ्क्तयः । द्वितीये स्तरे तु सर्वाः अलङ्कारपङ्क्तयः गोलाकाराः एव । तृतीयाट्टे स्थिताः ताः कोणाकाराः । तदुपरि स्थितयोः अट्टयोः भित्तिः तु सामान्या । तन्नाम अलङ्कारपङ्क्तिरहिता । फिरोजशाहः एतत् भवनं निर्मितवान् इति श्रूयते । एतस्य प्रत्यट्टं चन्द्रशाला अस्ति । एतस्य शिखरे किरीटसदृशी काचित् रचना आसीत् इति श्रूयते । किन्तु १८०३ तमे वर्षे जातस्य भूकम्पस्य कारणतः सा अधः अपतत् ।

कुतुबमिनारभवनात् अनतिदूरे एव चतुर्थशतकीयः कश्चन लोहस्तम्भः अस्ति । एतस्य परिधिः १६ पादमितः । औन्नत्यं च २३.८ पादमितम् । एतस्य उपरि चन्द्रगुप्तविक्रमादित्यस्य प्रशंसावचनानि उत्कीर्णानि सन्ति ।


CHANDAMAMA HAS LOTS OF GOOD STORIES WITH MORAL VALUES AND USEFUL INFORMATION. (from Sharjah)

WORDS CANNOT DESCRIBE HOW GOOD CHANDAMAMA IS. IT IS A GEM OF A MAGAZINE. (from W.Bengal)

THE MAGAZINE HAS SUPER SENSATIONAL STORIES. (from Karnataka)

CHANDAMAMA IS A SOURCE OF ENJOYMENT. HOPE IT WILL CONTINUE TO ENTERTAIN MANY GENERATIONS OF YOUNG PEOPLE. (from Orissa)



THAT'S WHAT OUR READERS SAY.

WHY DON'T YOU FIND OUT FOR YOURSELF?

FOR SUBSCRIPTION DETAILS PLEASE SEE PAGE 4

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थ विज्ञानम्

### तद्रूपिजीविनः विषये किञ्चित् ....

'डाली' इति नाम भवद्भिः श्रुतं स्यात् एव । मेषायाः कस्याश्चित् नाम तत् । तस्याः जन्म एव विशिष्टम् । यतः सा अस्ति प्रथमा तद्रूपिजीवी (Cloned animal) । यद्यपि मातापुत्र्योः षड्वर्षात्मकः कालभेदः अस्ति, तथापि माता इव एव दृश्यते सा । वैशिष्ट्यं नाम तस्याः 'पिता' नास्ति ।

अस्माकं शरीरं जीवकोषैः निर्मितम् । तेषु च जीवकोषेषु वंशवाहिनः अंशाः (डि.एन्.ए.) भवन्ति । प्रतिजनं यः भेदः दृश्यते तस्य कारणम् एते एव अंशाः । जीविषु ये वंशवाहकाशाः भवन्ति तेषाम् अर्धभागः पितृसम्बद्धः, पुनः अर्धभागः मातृसम्बद्धः च भवति । तद्रूपि-सृष्टिसमये विज्ञानिनः कस्यचित् जीविनः जीवकोषात् वंशवाह्यंशान् स्वीकृत्य अण्डकोषे स्थापयन्ति । तत्र अन्यजीविनः जीवकोषान् योजयन्ति । ततः यस्याम् एतत्सर्वं स्थाप्यते तदीयाः वंशवाह्यंशाः अपनीयन्ते । एतेन एव क्रमेण डाली जन्म प्राप्तवती ।



## भवतां परिसरः

### गभीरे समुद्रे निवसन्तः जलचराः



वेल्-सील्-डाल्फिन्प्रभृतयः गभीरसमुद्रवासिनः जलचराः समुद्रस्य नैल्यं द्रष्टुं न शक्नुवन्ति इत्येतत् किं जानन्ति भवन्तः ?

प्राचीनानां शिलानां, वृक्षाणां, जीव्यवशेषाणां च अध्ययनं ये कुर्वन्ति ते उच्यन्ते 'पुराण-कालान्वेषकाः' इति । ते पूर्वोक्तस्य कारणम् एवं चिन्तयन्ति – ''प्राचीने काले वेल्-डाल्फिन्प्रभृतयः शिला-पङ्क-सिकतामयादिषु, नीलप्रकाशरहितेषु तीरप्रदेशेषु निवसन्ति स्म । अतः तेषां नेत्रे नील-वर्णरहितस्य वस्तुनः दर्शने सामर्थ्यम् अवाप्नुताम् । मानवेषु अन्येषु जीविषु च रक्तादिवर्णानाम् अभिज्ञानाय अपेक्षितानि अङ्गानि भवन्ति । वस्तुतः प्रतिफलिताः वर्णकिरणाः जीविनां मस्तिष्कं प्राप्य तत्तद्वस्तुनः स्वरूपम् अवगमयन्ति ।

यद्यपि डाल्फिनाः नीलवर्णं द्रष्टुं न शक्नुवन्ति तथापि तेषां दृष्टिः तु मानवानां दृष्टेः अपेक्षया अपि तीक्ष्णतरा । ते तु जलस्थम् अपि वस्तु लीलया द्रष्टुम् अर्हन्ति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### कुक्कुटाण्डस्य रहस्यम्

यदि कुक्कुटाण्डस्य उपरि भारः स्थाप्येत तर्हि किं भवेत् ? अण्डस्य आवरणं भग्नं भवेत् । एवं ननु ? एवं तर्हि कुक्कुटः यदा तदुपरि स्वभारं स्थापयति तदा किमर्थं तत् भग्नं न भवति ? अत्र कारणम् अस्ति एतस्य आकारः । भगवता कुक्कुटाण्डं विशिष्टेन आकारेण निर्मितम् अस्ति ।

भवन्तः कुक्कुटाण्डस्य विक्रयणव्यवस्थां दृष्टवन्तः स्युः । कुक्कुटाण्डानि ऊर्ध्वमुखतया स्थाप्यन्ते तत्र । तापकल्पनसमये कुक्कुटः अपि ऊर्ध्वमुखतया तत् गृह्णाति । अतः एव भारे पतिते अपि अण्डस्य भङ्गः न भवति । एतस्मात् स्पष्टं यत् वस्तुनः भङ्गे तस्य आकारः अपि कारणं भवति इति । यद्यपि कुक्कुटाण्डस्य आवरणं भङ्गुरम् अस्ति, तथापि भगवता दत्तस्य आकारस्य कारणतः तत् भग्नं झटिति न भवति ।



## किं भवन्तः जानन्ति ?

### विज्ञानविषये अत्र सन्ति प्रश्नाः ।

१. भारतस्य प्रथमस्य उपग्रहस्य नाम किम् ? कस्मात् प्रदेशात् सः आकाशं प्रति प्रेषितः ?





२. भारतीयस्य परम-सामर्थ्योपेतस्य सङ्गणकस्य निर्माणं कृतवत्याः संस्थायाः नाम किम् ?

३. कः भारतीयः विज्ञानी स्वपुत्र्याः नाम्ना एव गणितग्रन्थं निर्दिष्टवान् ?





४. महावीराचार्यः कः ? तस्य प्रसिद्धा कृतिः का ?

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



SOURAA



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





'मे' मासस्य चित्रशीर्षिकाप्रेषकः -

**जितेन्द्रनाथगुरुः**

पद्मपुरम्, राजबोरासम्बरम्,

**बरगढ - ७६८ ०३६,** ओरिस्सा

सङ्गीततरङ्गात् तु चित्तविश्रान्तिः ।
वार्ताध्ययनाद्धि अपगच्छति भ्रान्तिः ।।

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. रोहिणी - ७५, थुम्बातः १९६७ तमे वर्षे नवेम्बर्मासे ।
२. भाभा अटोमिक् रिसर्च् सेण्टर्, मुम्बयी ।
३. भास्कराचार्यः, लीलावती इति ग्रन्थस्य नाम ।
४. जैनगणितज्ञः (क्रि.श.९) 'गणितसारसङ्ग्रहः' इति ग्रन्थस्य नाम ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# अहो, अपव्ययः !



कदाचित् वीणा मात्रा सह वस्तूनां क्रयणाय विपणिं गतवती आसीत् । प्रत्यागमनसमये तया चिन्तितं यत् अनतिदूरे एव स्थितस्य पितुः कार्यालयः कुतो वा न गन्तव्यः इति । ततः ते तं कार्यालयं गते । तत्र वीणया ज्ञातं यत् पिता गोष्ठीप्रकोष्ठे अस्ति, अचिरात् एव प्रत्यागच्छेत् इति । अतः वीणा मात्रा सह पितुः प्रकोष्ठं प्रविष्टवती उपवेशनाय । यदा प्रकोष्ठः प्रविष्टः तदा वीणा क्षणकालं स्तब्धा । तत्र शीतकल्पकं यन्त्रम् (ए.सि.) कार्यं कुर्वत् आसीत् । दण्डदीपाः उत्पीठिकादीपः च प्रवर्तिताः एव दृष्टाः । व्यजनानि अपि भ्रमन्ति वायुं निस्सारयन्ति स्म । गोष्ठीं समाप्य प्रकोष्ठं प्रत्यागतः पिता पुत्रीं पत्नीं च दृष्ट्वा नितराम् आश्चर्यान्वितः । वीणा तम् अवदत् – ''तात ! भवान् गृहे सदा मां वदति यत् यदा उपयोगः न भवति तदा दीपानां व्यजनानां च सम्पर्कः छेत्तव्यः पिञ्जनोदनेन इति । किन्तु सः एव नियमः अत्र भवत्कार्यालये पाल्यमानः न दृश्यते । यदा भवान् स्वप्रकोष्ठे न भवति तदा अपि शीतकरणव्यवस्था-दीपव्यजनादयः प्रवर्तमानाः एव दृश्यन्ते । एतस्य व्ययस्य भारः कार्यालयेन कामं निरुह्येत, तथापि अत्र विद्युतः अपव्ययः जायमानः अस्ति इति तु सत्यं खलु ?'' इति ।

वीणायाः एतेन प्रश्नेन चपेटिकाप्रहारः कृतः इव । 'अहो, सूक्ष्मचिन्तनं मम पुत्र्याः ! मया अलक्षितम् अंशं स्मारयन्त्या तया मम नेत्रे उन्मीलिते' इति अचिन्तयत् वीणायाः पिता ।

ततः सः अवदत् – ''वत्से ! नितराम् उपकृतोऽस्मि अहम् । इतः परम् अहं गृहे कार्यालये वा अनुपयुज्यमानानां दीपव्यजनादीनां स्थगनं कदापि न विस्मरिष्यामि । विद्युतः अपव्ययः महते अपराधाय इति अहं जानामि एव'' इति ।

DO YOU



KNOW?






Dear Children,
Write a slogan on Power Conservation and win attractive Prizes!

I save energy because ..........
Name : .......... Age : ..........
Address : ..........
.......... Ph : ..........

PETROLEUM CONSERVATION RESEARCH ASSOCIATION
10, Bhikaji Cama Place, New Delhi 110066.
E-mail : pcra@pcra.org

